च्छदोपन्यपोहाय प्रायश्चित्तलक्षणः; प्रज्ञप्तिः—संशयापन्नस्य मधुरवचनैः प्रज्ञापनं; दृष्टिवादश्च—श्रोत्रपेक्षया सूक्ष्मजीवादिभावकथनमिति ॥ १० ॥

तथा—ज्ञानाद्याचारकथनमिति ॥ ११ ॥ (६९)

ज्ञानस्य—श्रुतलक्षणस्य आचारः ज्ञानाचारः, आदिशब्दाद्दर्शनाचारश्चारित्राचारस्तपआचारो वीर्याचारश्चेति, ततो ज्ञानाद्याचाराणां कथनं—प्रज्ञापनमिति समासः, तत्र ज्ञानाचारोऽष्टधा—कालविनयबहुमानोपधानानिह्नवव्यञ्जनार्थतदुभयभेदलक्षणः, तत्र काल इति यो यस्य अङ्गप्रविष्टादेः श्रुतस्य काल उक्तः तस्मिन्नेव तस्य स्वाध्यायः कर्त्तव्यो नान्यदा तीर्थंकरवचनात्, दृष्टं च कृष्यादेः कालकरणे फलं विपर्यये तु विपर्यय इति १, तथा श्रुतग्रहणं कुर्वता गुरोर्विनयः कार्यः, विनयो ह्यभ्युत्थानपादधावनादिः, अविनयगृहीतं हि तदफलं भवति २, तथा श्रुतग्रहणोद्यतेन गुरोर्बहुमानः कार्यः, बहुमानो नामाऽऽन्तरो भावप्रतिबन्धः ३, एतस्मिन्सत्यक्षेपेणाविकलं श्रुतं भवति, अत्र च विनयबहुमानयोश्चतुर्भङ्गी भवति-एकस्य विनयो न बहुमानः १, अपरस्य बहुमानो न विनयः २ अन्यस्य विनयोऽपि बहुमानोऽपि ३, अन्यतरस्य न विनयो नापि बहुमान ४ इति ३, तथा श्रुतग्रहणमभीप्सतोपधानं कार्यं, उपदधाति—पुष्णाति श्रुतमित्युपधानं—तपः, तद्धि यद्यत्राध्ययने आगाढादियोगलक्षणमुक्तं तत्तत्र कार्यं, तत्पूर्वं श्रुतग्रहणस्यैव सफलत्वात् ४, 'अनिह्नव' इति गृहीतश्रुतेनानिह्नवः कार्यः, यद्यत्सकाशेऽधीतं तत्र स एव कथनीयो नान्यः, चित्तकालुष्यापत्तेरिति ५, तथा श्रुतग्रहणप्रवृत्तेन तत्फलमभीप्सता व्यञ्जनभेदोऽर्थभेद उभयभेदश्च न कार्यः, तत्र व्यञ्जनभेदो यथा—"धम्मो मंगलमुक्किट्ठं" इति वक्तव्ये "पुन्नो कल्लाणमुक्कोसं" इत्याह, अर्थभेदस्तु यथा—"आवंती केयावंती लो-

तथा—तन्त्रावतार इति ॥ ९ ॥ (६७)

तन्त्रे—आगमे अवतारः—प्रवेशः आगमबहुमानोत्पादनद्वारेण तस्य विधेयः, आगमबहुमानश्चैवमुत्पादनीयः—"परलोकविधौ शास्त्रात्प्रायो नान्यदपेक्षते। आसन्नभव्यो मतिमान्, श्रद्धाधनसमन्वितः ॥४९॥ उपदेशं विनाऽप्यर्थकामौ प्रति पटुर्जनः। धर्मस्तु न विना शास्त्रादिति तत्रादरो हितः ॥५०॥ अर्थादावविधानेऽपि, तदभावः परं नृणाम्। धर्मेऽविधानतोऽनर्थः, क्रियोदाहरणात्परः ॥५१॥ तस्मात्सदैव धर्मार्थी, शास्त्रयत्नः प्रशस्यते। लोके मोहान्धकारेऽस्मिन्, शास्त्रालोकः प्रवर्तकः ॥५२॥ 'शास्त्रयत्न' इति शास्त्रे यत्नो यस्येति समासः। पापामयौषधं शास्त्रं, शास्त्रं पुण्यनिबन्धनम्। चक्षुः सर्वत्रगं शास्त्रं, शास्त्रं सर्वार्थसाधनम् ॥५३॥ न यस्य भक्तिरेतस्मिंस्तस्य धर्मक्रियाऽपि हि। अन्धप्रेक्षाक्रियातुल्या, कर्मदोषादसत्फला ॥५४॥ यः श्राद्धो मन्यते मान्यान्, अहङ्कारविवर्जितः। गुणरागी महाभागस्तस्य धर्मक्रिया परा ॥५५॥ यस्य त्वनादरः शास्त्रे, तस्य श्रद्धादयो गुणाः। उन्मत्तगुणतुल्यत्वान्न प्रशंसास्पदं सताम् ॥५६॥ मलिनस्य यथाऽत्यन्तं, जलं वस्त्रस्य शोधनम्। अन्तःकरणरत्नस्य, तथा शास्त्रं विदुर्बुधाः ॥५७॥ शास्त्रे भक्तिर्जगद्वन्द्यैर्मुक्तिदूती परोदिता। अत्रैवेयमतो न्याय्या, तत्प्राप्त्यासन्नभावतः ॥ ५८॥" (योग० २२१-३०) [ अत्रैव इति मुक्तौ एव। इयमिति शास्त्रभक्तिः। तत्प्राप्त्यासन्नभावत इति—मुक्तिप्राप्तिसमीपभावात्।] ९।

तथा—प्रयोग आक्षेपण्या इति ॥ १० ॥ (६८)

प्रयोगो—व्यापारणं धर्मकथाकाले आक्षिप्यन्ते—आकृष्यन्ते मोहात्तत्त्वं प्रति भव्यप्राणिनः अनयेत्याक्षेपणी तस्याः कथायाः, सा च आचारव्यवहारप्रज्ञप्तिदृष्टिवादभेदाच्चतुर्धा, तत्राचारो—लोचास्नानादिसाधुक्रियारूपः, व्यवहारः—कथञ्चिदाप-

तथा—अबोधेऽप्यनिन्देति ॥ ५ ॥ (६३)

'अबोधेऽपि' अनवगमेऽपि सामान्यगुणानां विशेषगुणानां वा व्याख्यातानामप्यनिन्दा—अहो मन्दबुद्धिर्भवान् य इत्थमाचक्षाणेष्वपि अस्मासु न बुध्यते वस्तुतत्त्वमित्येवं श्रोतुस्तिरस्कारपरिहाररूपा, निन्दितो हि श्रोता किञ्चिद् बुभुत्सुः अपि सन् दूरं विरज्यत इति ॥ ५ ॥ तर्हि किं कर्तव्यमित्याह—

शुश्रूषाभावकरणमिति ॥ ६ ॥ (६४)

धर्मशास्त्रं प्रति श्रोतुमिच्छा शुश्रूषा तल्लक्षणो भावः—परिणामः तस्य करणं—निर्वर्तनं श्रोतुस्तैस्तैर्वचनैरिति, शुश्रूषामनुत्पाद्य धर्मकथने प्रत्युत अनर्थसंभवः, पठ्यते च—" स खलु पिशाचकी वातकी वा यः परेऽनर्थिनि वाचमुदीरयते " ॥ ६ ॥

तथा—भूयो भूय उपदेश इति ॥ ७ ॥ (६५)

भूयो भूयः—पुनः पुनः उपदिश्यते इत्युपदेशः—उपदेष्टुमिष्टो वस्तुविषयः कथञ्चिदनवगमे सति कार्यः, किं न क्रियन्ते दृढसंनिपातरोगिणां पुनः पुनः क्रियाः तिक्तादिक्वाथपानोपचारा इति ॥ ७ ॥

तथा—बोधे प्रज्ञोपवर्णनमिति ॥ ८ ॥ (६६)

'बोधे'—सकृदुपदेशेन भूयो भूय उपदेशेन वा उपदिष्टवस्तुनः परिज्ञाने तस्य श्रोतुः 'प्रज्ञोपवर्णनं' बुद्धिप्रशंसनं, यथा नालघुकर्माणः प्राणिन एवंविधसूक्ष्मार्थबोद्धारो भवन्तीति ॥ ८ ॥

तथा—स्वयं परिहार इति ॥ २१ ॥ (७९)

'स्वयम्' आचारकथकेन परिहारः असदाचारस्य संपादनीयः, यतः स्वयमसदाचारमपरिहरतो धर्मकथनं नटवैराग्यकथनमिवानादेयमेव स्यात्, न तु साध्यसिद्धिकरमिति ॥ २१ ॥

तथा—ऋजुभावाऽऽसेवनमिति ॥ २२ ॥ (८०)

ऋजुभावस्य—कौटिल्यत्यागरूपस्य आसेवनम्—अनुष्ठानं देशकेनैव कार्यं, एवं हि तस्मिन्नविप्रतारणकारिणि संभाविते सति शिष्यस्तदुपदेशान्न कुतोऽपि दूरवर्ती स्यादिति ॥ २२ ॥

तथा—अपायहेतुत्वदेशनेति ॥ २३ ॥ (८१)

अपायानां—अनर्थानां इहलोकपरलोकगोचराणां हेतुत्वं—प्रस्तावादसदाचारस्य यो हेतुभावः तस्य देशना विधेया, यथा—"यन्न प्रयान्ति पुरुषाः स्वर्गं यच्च प्रयान्ति विनिपातम्। तत्र निमित्तमनार्यः प्रमाद इति निश्चितमिदं मे ॥६६॥" प्रमादश्चासदाचार इति ॥ २३ ॥ अपायानेव व्यक्तीकुर्वन्नाह—

नारकदुःखोपवर्णनमिति ॥ २४ ॥ (८२)

नरके भवा नारकाः तेषां उपलक्षणत्वात्तिर्यगादीनां च दुःखानि—अशर्माणि तेषामुपवर्णनं विधेयं, यथा—"तीक्ष्णैरसिभिर्दीप्तैः कुन्तैर्विषमैः परश्वधैश्चक्रैः। परशुत्रिशूलतोमरमुद्गरवासीमुषण्ढीभिः ॥ ६७ ॥ संभिन्नतालुशिरसश्छिन्नभुजाश्छिन्नकर्णनासौष्ठाः। भिन्नहृदयोदरान्त्रा भिन्नाक्षिपुटाः सुदुःखार्त्ताः ॥ ६८ ॥ निपतन्त उत्पतन्तो विचेष्टमाना महीतले दीनाः।

धर्मदेशनाविधिः

शास्त्रविशेष

देवस्थानाच्च्युतावपि विशिष्टे देशे विशिष्टे कुले निष्कलङ्के अन्वये उदग्रे सदाचारेणाख्यायिकापुरुषयुक्ते अनेकमनोरथावपूरकं अत्यन्तनिरवद्यं जन्मेत्यादिर्विक्ष्यमाणलक्षणैवोक्तिः ॥ १७ ॥

तथा—कल्याणपरम्पराख्यानमिति ॥ १८ ॥ (७६)

ततः सुकुलागमनादनन्तरं कल्याणपरम्परायाः—तत्र सुन्दरं रूपं, आलयो लक्षणानां, रहितं आमयेन इत्यादिरूपायाः अत्रैव धर्मफलाध्याये वक्ष्यमाणायाः आख्यानं—निवेदनं कार्यमिति ॥ १८ ॥

तथा—असदाचारगर्हेति ॥ १९ ॥ (७७)

असदाचारः—सदाचारविलक्षणो हिंसानृतादिदशविधपापहेतुभेदरूपः, यथोक्तम्—" हिंसानृतादयः पञ्च, तत्त्वाश्रद्धानमेव च। क्रोधादयश्च चत्वार, इति पापस्य हेतवः ॥ ६२ ॥ (शास्त्रवार्त्ता० ४) तस्य गर्हा असदाचारगर्हा, यथा—" न मिथ्यात्वसमः शत्रुर्न मिथ्यात्वसमं विषम्। न मिथ्यात्वसमो रोगो, न मिथ्यात्वसमं तमः ॥६३॥ द्विषद्विषतमोरोगैर्दुःखमेकत्र दीयते। मिथ्यात्वेन दुरन्तेन, जन्तोर्जन्मनि जन्मनि ॥ ६४ ॥ वरं ज्वालाऽऽकुले क्षिप्तो, देहिनाऽऽत्मा हुताशने। न तु मिथ्यात्वसंयुक्तं, जीवितव्यं कदाचन ॥ ६५ ॥" इति तत्त्वाश्रद्धानगर्हा, एवं हिंसादिष्वपि गर्हायोजना कार्या ॥ १९ ॥

तथा—तत्स्वरूपकथनमिति ॥ २० ॥ (७८)

तस्य—असदाचारस्य हिंसादेः स्वरूपकथनं, यथा "प्रमत्तयोगात् प्राणिव्यपरोपणं हिंसा," "असदभिधानं मृषा" (मनृतं), " अदत्तादानं स्तेयं," "मैथुनमब्रह्म", "मूर्च्छा परिग्रहः" ( त० अ० ७ सू० ८-९-१०-११-१२) इत्यादि ॥ २० ॥

तिबुद्ध्या पालना कार्येति च कथ्यते इति ॥ १२ ॥

तथा–अशक्ये भावप्रतिपत्तिरिति ॥ १३ ॥ (७१)

'अशक्ये' ज्ञानाचारादिविशेष एव कर्तुमपार्यमाणे कुतोऽपि धृतिसंहननकालबलादिवैकल्याद् 'भावप्रतिपत्तिः' भावेन–अन्तःकरणेन प्रतिपत्तिः–अनुबन्धः, न पुनस्तत्र प्रवृत्तिरपि, अकालौत्सुक्यस्य तत्त्वत आर्तध्यानत्वादिति ॥१३॥

तथा–पालनोपायोपदेश इति॥१४ ॥ ७२ ॥

एतस्मिन् ज्ञानाद्याचारे प्रतिपन्ने सति पालनाय उपायस्य–अधिकगुणतुल्यगुणलोकमध्यसंवासलक्षणस्य निजगुणस्थानकोचितक्रियापरिपालनानुस्मरणस्वभावस्य चोपदेशो दातव्य इति ॥ १४ ॥

तथा–फलप्ररूपणेति ॥ १५ ॥ (७३)

अस्याचारस्य सम्यक्परिपालितस्य सतः फलं–इहैव तावदुपप्लवह्रासो भावैश्वर्यवृद्धिर्जनप्रियत्वं च परत्र च सुगतिजन्मोत्तमस्थानलाभः परम्परया निर्वाणावाप्तिश्चेति यत्कार्यं तस्य प्ररूपणा–प्रज्ञापना विधेयेति ॥ १५ ॥ अत्रैव विशेषमाह–

देवर्द्धिवर्णनमिति ॥ १६ ॥ (७४)

देवानां–वैमानिकानां ऋद्धेः–विभूतेः रूपादिलक्षणाया वर्णनं–प्रकाशनं, यथा तत्रोत्तमा रूपसंपत् सत्स्थितिप्रभावसुखद्युतिलेश्यायोगः विशुद्धेन्द्रियावधित्वं प्रकृष्टानि भोगसाधनानि दिव्यो विमाननिवह इत्यादि वक्ष्यमाणमेव ॥१६॥

तथा–सुकुलागमनोक्तिरिति ॥ १७ ॥ (७५)

कित्सः, साध्वेव जिनदर्शनं, किन्तु प्रवृत्तस्यापि सतो ममास्मात्फलं भविष्यति वा न वा, कृषीवलादिक्रियासूभयथाऽप्युपलब्धेरिति कुविकल्परहितः, न ह्यविकल उपाय उपेयवस्तुपरिप्रापको न भवतीति सञ्जातनिश्चय इत्यर्थः, यद्वा निर्विज्जुगुप्सः—साधुजुगुप्सारहितः ३, तथा 'अमूढदृष्टिः' बालतपस्वितपोविद्याद्यतिशयैर्न मूढा—स्वभावान्न चलिता दृष्टिः—सम्यग्दर्शनरूपा यस्यासौ अमूढदृष्टिः ४, एतावान् गुणिप्रधानो दर्शनाचारनिर्देशः, अधुना गुणप्रधानः—उपबृंहणं नाम समानधार्मिकाणां सद्गुणप्रशंसनेन तद्वृद्धिकरणं ५, स्थिरीकरणं—धर्माद्विषीदतां तत्रैव स्थापनं ६, वात्सल्यं—समानधार्मिकजनोपकारकरणं ७, प्रभावना—धर्मकथादिभिस्तीर्थख्यापनेति ८, गुणप्रधानश्चायं निर्देशो गुणगुणिनोः कथञ्चिद्भेदख्यापनार्थम्, एकान्ताभेदे गुणनिवृत्तौ गुणिनोऽपि निवृत्तेः शून्यतापत्तिरिति।

चारित्राचारोऽष्टधा पञ्चसमितित्रिगुप्तिभेदात्, समितिगुप्तिस्वरूपं च प्रतीतमेव। तपआचारस्तु द्वादशविधः बाह्याभ्यन्तरतपःषट्कद्वयभेदात्, तत्र 'अनशन १ मूनोदरता २ वृत्तेः संक्षेपणं ३ रसत्यागः ४। कायक्लेशः ५ संलीनतेति बाह्यं तपः प्रोक्तम् ॥ ६० ॥ प्रायश्चित्तध्याने वैयावृत्त्यविनयावथोत्सर्गः। स्वाध्याय इति तपः षट्प्रकारमाभ्यन्तरं भवति ॥ ६१ ॥" (प्रशम. १७५–१७६) वीर्याचारः पुनः अनिगूहितबाह्याभ्यन्तरसामर्थ्यस्य सतः अनन्तरोक्तषट्त्रिंशद्विधे ज्ञानदर्शनाद्याचारे यथाशक्ति प्रतिपत्तिलक्षणं पराक्रमणं प्रतिपत्तौ च यथाबलं पालनेति ॥ ११ ॥

तथा—निरीहशक्यपालनेति ॥ १२ ॥ (७०)

निरीहेण—ऐहिकपारलौकिकफलेषु राज्यदेवत्वादिलक्षणेषु व्यावृत्ताभिलाषेण शक्यस्य—ज्ञानाचारादेः विहितमिदमि-

र्थनं, तथा—" चक्षुष्मन्तस्त एवेह, ये श्रुतज्ञानचक्षुषा। सम्यक् सदैव पश्यन्ति, भावान् हेयेतरान्नराः ॥ ८६ ॥ " ३२ ॥ अयं च श्रुतधर्मः प्रतिदर्शनमन्यथाऽन्यथा प्रवृत्त इति नास्माद्वचापि तत्सम्यग्भावं विवेचयितुमलमित्याह—

बहुत्वात्परीक्षावतार इति ॥ ३३ ॥ (९१)

तस्य हि बहुत्वाच्छ्रुतधर्माणां श्रुतधर्मः श्रुतधर्म इति शब्दसमानतया विप्रलब्धबुद्धेः परीक्षायां—त्रिकोटिपरिशुद्धिलक्षणायां श्रुतधर्मसम्बन्धिन्यामवतारः कार्यः, अन्यत्राप्यवाचि—"तं शब्दमात्रेण वदन्ति धर्मं, विश्वेऽपि लोका न विचारयन्ति। स शब्दसाम्येऽपि विचित्रभेदैर्विभिद्यते क्षीरमिवार्चनीयः ॥ ८७ ॥ लक्ष्मीं विधातुं सकलां समर्थं, सुदुर्लभं विश्वजनीनमेनम्। परीक्ष्य गृह्णन्ति विचारदक्षाः, सुवर्णवद्वञ्चनभीतचित्ताः ॥ ८८ ॥ " इति ॥ ३३ ॥ परीक्षोपायमेवाह—

कषादिप्ररूपणेति ॥ ३४ ॥ (९२)

यथा सुवर्णमात्रसाम्येन तथाविधमुग्धलोकेष्वविचारेणैव शुद्धाशुद्धरूपस्य सुवर्णस्य प्रवृत्तौ कषच्छेदतापाः परीक्षणाय विचक्षणैराद्रियन्ते तथाऽत्रापि श्रुतधर्मे परीक्षणीये कषादीनां प्ररूपणेति ॥ ३४ ॥ कषादीनेवाह—

विधिप्रतिषेधौ कष इति ॥ ३५ ॥ (९३)

विधिः—अविरुद्धकर्तव्यार्थोपदेशकं वाक्यं, यथा स्वर्गकेवलार्थिना तपोध्यानादि कर्तव्यं समितिगुप्तिशुद्धा क्रिया इत्यादि, प्रतिषेधः पुनः—न हिंस्यात्सर्वभूतानि नानृतं वदेत् इत्यादि, ततो विधिश्च प्रतिषेधश्च विधिप्रतिषेधौ, किमित्याह-'कषः' सुवर्णपरीक्षायामिव कषपट्टके रेखा, इदमुक्तं भवति—यत्र धर्मे उक्तलक्षणो विधिः प्रतिषेधश्च पदे पदे सुपुष्कल उपलभ्यते स

कषच्छेद तापाः

छेतनायेल

जगदेनाहित

पुरुषकारस्य–उत्साहलक्षणस्य सत्कथा–माहात्म्यप्रशंसनं, यथा–"दुर्गा तावदियं समुद्रपरिखा तावन्निरालम्बनं, व्योमैतन्ननु तावदेव विषमः पातालयात्रागमः। दत्त्वा मूर्द्धनि पादमुद्यमभिदो दैवस्य कीर्तिप्रियैः, वीरैर्यावदहो न साहसतुलामारोप्यते जीवितम् ॥८३॥" तथा "विहाय पौरुषं कर्म, यो दैवमनुवर्त्तते। तद्धि शाम्यति तं प्राप्य, क्लीवं पतिमिवाङ्गना ॥८४॥" २९॥

तथा–वीर्यर्द्धिवर्णनमिति ॥ ३० ॥ (८८)

वीर्यर्द्धेः–प्रकर्षरूपायाः शुद्धाचारवलभ्यायाः तीर्थंकरवीर्यपर्यवसानायाः वर्णनमिति, यथा–"मेरुं दण्डं धरां छत्रं, यत्केचित्कर्तुमीशते। तत्सदाचारकल्पद्रुफलमाहुर्महर्षयः ॥ ८५ ॥" ३० ॥

तथा–परिणते गम्भीरदेशनायोग इति ॥ ३१ ॥ (८९)

अस्मिन् पूर्वमुद्दिष्टे उपदेशजाले श्रद्धानज्ञानानुष्ठानवत्तया 'परिणते' सात्मीभावमुपगते सति उपदेशार्हस्य जन्तोः गम्भीरायाः–पूर्वदेशनापेक्षया अत्यन्तसूक्ष्माया आत्मास्तित्वतद्बन्धमोक्षादिकाया देशनायाः योगः–व्यापारः कार्यः, इदमुक्तं भवति–यः पूर्वं साधारणगुणप्रशंसादिः अनेकधोपदेशः प्रोक्त आस्ते स यदा तदावारककर्महासातिशयादङ्गाङ्गीभावलक्षणं परिणाममुपागतो भवति तदा जीर्णे भोजनमिव गम्भीरदेशनायामसौ देशनार्होऽवतार्यते इति ॥३१॥ अयं च गम्भीरदेशनायोगो न श्रुतधर्मकथनमन्तरेणोपपद्यते इत्याह—

श्रुतधर्मकथनमिति ॥ ३२ ॥ (९०)

श्रुतधर्मस्य–वाचनाप्रच्छनापरावर्तनानुप्रेक्षाधर्मकथनलक्षणस्य सकलकुशलकलापकल्पद्रुमविपुलाऽऽलवालकल्पस्य क-

'उपायतः' उपायेन अनर्थप्रधानानां मूढपुरुषलक्षणानां प्रपञ्चनरूपेण मोहस्य–मूढताया निन्दा–अनादरणीयताख्यापनेति, यथा–"अमित्रं कुरुते मित्रं, मित्रं द्वेष्टि हिनस्ति च । कर्म चारभते दुष्टं, तमाहुर्मूढचेतसम् ॥ ७४ ॥ अर्थवन्त्युपपन्नानि, वाक्यानि गुणवन्ति च । नैव मूढो विजानाति, मुमूर्षुरिव भेषजम् ॥७५॥ संप्राप्तः पण्डितः कृच्छ्रं, प्रज्ञया प्रतिबुध्यते । मूढस्तु कृच्छ्रमासाद्य, शिलेवाम्भसि मज्जति ॥७६॥ अथवोपायतो–मोहफलोपदर्शनद्वारलक्षणात् मोहनिन्दा कार्येति, "जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतम् । वीक्षमाणा अपि भवं, नोद्विजन्त्यपि मोहतः ॥ ७७ ॥ धर्मबीजं परं प्राप्य, मानुष्यं कर्मभूमिषु । न सत्कर्मकृषावस्य, प्रयतन्तेऽल्पमेधसः ॥ ७८ ॥ अस्येति–धर्मबीजस्य । बडिशामिषवत्तुच्छे, कुसुखे दारुणोदये । सक्तास्त्यजन्ति सच्चेष्टां, धिगहो दारुणं तमः ॥ ७९ ॥" इति ॥ २७ ॥

तथा–सज्ज्ञानप्रशंसनमिति ॥ २८ ॥ (८६)

सद्–अविपर्यस्तं ज्ञानं यस्य स सज्ज्ञानः–पण्डितो जनः तस्य सतो वा ज्ञानस्य–विवेचनलक्षणस्य प्रशंसनं–पुरस्कार इति, यथा–"तन्नेत्रैस्त्रिभिरीक्षते न गिरिशो नो पद्मजन्माऽष्टभिः, स्कन्दो द्वादशभिर्न वा न मघवा चक्षुःसहस्रेण च । सम्भूयापि जगत्त्रयस्य नयनैस्तद्वस्तु नो वीक्ष्यते, प्रत्याहृत्य दृशः समाहितधियः पश्यन्ति यत् पण्डिताः ॥ ८० ॥" तथा "नाप्राप्यमभिवाञ्छन्ति, नष्टं नेच्छन्ति शोचितुम् । आपत्सु च न मुह्यन्ति, नराः पण्डितबुद्धयः ॥ ८१ ॥ न हृष्यत्यात्मनो माने, नापमाने च रुष्यति । गाङ्गो ह्रद इवाक्षोभ्यो, यः स पण्डित उच्यते ॥ ८२ ॥"

तथा–पुरुषकारसत्कथेति ॥ २९ ॥ (८७)

नेक्षन्ते त्रातारं नैरयिकाः कर्मपटलान्धाः ॥ ६७ ॥ क्षुत्तृड्हिमात्युष्णभयार्दितानां, पराभियोगव्यसनातुराणाम् । अहो तिरश्चामभिदुःखितानां, सुखानुषङ्गः किल वार्तमेतत् ॥ ७० ॥ मानुष्यकेऽपि दारिद्र्यरोगदौर्भाग्यशोकमौर्ख्याणि । जातिकुलावयवादिन्यूनत्वं चाश्नुते प्राणी ॥ ७१ ॥ देवेषु च्यवनवियोगदुःखितेषु, क्रोधेर्ष्यामदमदनातितापितेषु । आर्या ! नस्तदिह विचार्य संवदन्तु, यत्सौख्यं किमपि निवेदनीयमस्ति ॥ ७२ ॥" इति ॥ २४ ॥

तथा–दुष्कुलजन्मप्रशस्तिरिति ॥ २५ ॥ (८३)

दुष्कुलेषु–शकयवनशवरबर्बरादिसंबंधिषु यज्जन्म–असदाचाराणां प्राणिनां प्रादुर्भावः तस्य प्रशस्तिः–प्रज्ञापना कार्या ॥ २५ ॥ तत्र चोत्पन्नानां किमित्याह—

दुःखपरम्परानिवेदनमिति ॥ २६ ॥ (८४)

दुःखानां–शारीरमानसाशर्मलक्षणानां या परम्परा–प्रवाहः तस्या निवेदनं–प्ररूपणं, यथा असदाचारपारवश्यात् जीवा दुष्कुलेषूत्पद्यंते, तत्र चासुन्दरवर्णरसगन्धस्पर्शशरीरभाजां तेषां दुःखनिराकरणनिबन्धनस्य धर्मस्य स्वप्नेऽप्यनुपलम्भात् हिंसानृतस्तेयाशुद्धकर्मकरणप्रवणानां नरकादिफलपापकर्मोपचय एव संपद्यते, तदभिभूतानामिह परत्र चाव्यवच्छिन्नानुबन्धा दुःखपरम्परा प्रसूयते, यदुच्यते–"तैः कर्मभिः स जीवो विवशः संसारचक्रमुपयाति । द्रव्यक्षेत्राद्धाभावभिन्नमावर्तते बहुशः ॥ ७३ ॥" ॥ २६ ॥

तथा–उपायतो मोहनिन्देति ॥ २७ ॥ (८५)

नातत्त्ववेदिवादः सम्यग्वाद इति ॥ ४४ ॥ (१०२)

'न' नैव अतत्त्ववेदिनः साक्षादेव वस्तुतत्त्वमज्ञातुं शीलस्य पुरुषविशेषस्य अर्वाग्दर्शिन इत्यर्थः 'वादः' वस्तुप्रणयनं अतत्त्ववेदिवादः, किमित्याह–'सम्यग्वादो' यथावस्थितार्थवादः, साक्षादवीक्षमाणेन हि प्रमात्रा प्रोक्तं जात्यन्धचित्रकरनरालिखितचित्रकर्मवद्यथावस्थितरूपविसंवादेन असमञ्जसमेव शास्त्रं स्यादिति कथं तद्भाषितं वस्तु अविपरीतरूपतां प्रतिपत्तुमुत्सहते ? इति ॥ ४४ ॥ सम्यग्वादताया एवोपायमाह–

बन्धमोक्षोपपत्तितस्तच्छुद्धिरिति ॥ ४५ ॥ (१०३)

बन्धो–मिथ्यात्वादिहेतुभ्यो जीवस्य कर्मपुद्गलानां च वह्न्ययःपिण्डयोरिव क्षीरनीरयोरिव वा परस्परमविभागपरिणामेनावस्थानं, मोक्षः–पुनः सम्यग्दर्शनज्ञानचारित्रेभ्यः कर्मणामत्यन्तोच्छेदः, ततो बन्धश्च मोक्षश्च बन्धमोक्षौ तयोः उपपत्तिः–घटना तस्याः सकाशात् तच्छुद्धिः-वस्तुवादनिर्मलता चिन्तनीया, इदमुक्तं भवति–यस्मिन् सिद्धान्ते बन्धमोक्षयोग्य आत्मा तैस्तैर्विशेषैर्निरूप्यते स सर्ववेदिपुरुषप्रतिपादित इति कोविदैर्निश्चीयते इति ॥४५॥ इयमपि बन्धमोक्षोपपत्तिर्यथा युज्यते तथाऽऽह–

इयं बध्यमानबन्धनभाव इति ॥ ४६ ॥ (१०४)

'इयं' बन्धमोक्षोपपत्तिः बध्यमानस्य बन्धनस्य च–वक्ष्यमाणस्य भावे–सद्भावे सति भवति ॥ ४६ ॥ कुत इत्याह–

कल्पनामात्रमन्यथेति ॥ ४७ ॥ (१०५)


अनुभवी

द्विश्चानयोरेवानाविर्भूतयोः आविर्भवनेनाविर्भूतयोश्च परिपालनेन फलवतो स्यात्, न चापरिणामिन्यात्मन्युक्तलक्षणौ कषच्छेदौ स्वकार्यं कर्तुं प्रभविष्णू स्यातामिति तयोः तापशुद्धावेव सफलत्वमुपपद्यते न पुनरन्यथेति ॥ ४१ ॥ ननु फलविकलावपि तौ भविष्यत इत्याह

फलवन्तौ च वास्तवाविति ॥ ४२ ॥ (१००)

उक्तलक्षणफलभाजौ सन्तौ पुनः या कषच्छेदौ तौ वास्तवौ कषच्छेदौ भवतः, स्वसाध्यक्रियाकारिणो हि वस्तुनो वस्तुत्वमुशन्ति सन्तः ॥ ४२ ॥ विपक्षे बाधामाह—

अन्यथा याचितकमण्डनमिति ॥ ४३ ॥ (१०१)

'अन्यथा' फलविकलौ सन्तौ वस्तुपरीक्षाधिकारे समवतारितावपि तौ याचितकमण्डनं वर्तेते इति, परकीयत्वसम्भावनोपहतत्वात्, कुत्सितं याचितं याचितकं तच्च तन्मण्डनं च—कटककुण्डलादि आभरणविशेषो याचितकमण्डनम्, द्विविधं ह्यलङ्कारफलं—निर्वाहे सति परिशुद्धाभिमानिकसुखजनिका स्वशरीरशोभा कथञ्चिन्निर्वहणाभावे च तेनैव निर्वाहः, न च याचितकमण्डने एतद्द्विनयमप्यस्ति परकीयत्वात्तस्य, ततो याचितकमण्डनमिव याचितकमण्डनं, इदमुक्तं भवति—द्रव्यपर्यायोभयस्वभावे जीवे कषच्छेदौ निरुपचरिततया स्थाप्यमानौ स्वफलं प्रत्यवन्ध्यसामर्थ्यावेव स्यातां, नित्याद्येकान्तवादे तु स्ववाग्दर्शोभार्थं तद्वादिभिः कल्प्यमानावप्येतौ याचितकमण्डनाकारौ प्रतिभासेते न पुनः स्वकार्यकराविति ॥ ४३ ॥ आह—अवगतं यथा कषच्छेदतापशुद्धः श्रुतधर्मो ग्राह्यः, परं किम्प्रणेतृकोऽसौ प्रमाणमिति व्यतिरेकतः साधयन्नाह—

तथाविधाशुद्धपर्यायनिरोधेन ध्यानाध्ययनाद्यपरशुद्धपर्यायप्रादुर्भावादुक्तलक्षणः कषो बाह्यचेष्टाशुद्धिलक्षणश्च छेद उपपद्यते, न पुनरन्यथेति ॥ ३७ ॥ एतेषां मध्यात्को बलीयान् इतरो वा इति प्रश्ने यत्कर्तव्यं तदाह—

अमीषामन्तरदर्शनमिति ॥ ६८ ॥ ( ९६ )

'अमीषां' त्रयाणां परीक्षाप्रकाराणां परस्परमन्तरस्य—विशेषस्य समर्थासमर्थत्वरूपस्य दर्शनं कार्यमुपदेशकेन ॥३८॥ तदेव दर्शयति—

कषच्छेदयोरयत्न इति ॥ ६९ ॥ (९७)

कषच्छेदयोः परीक्षाक्षमत्वेन आदरणीयतायाम् 'अयत्नः' अतात्पर्यं मतिमतामिति ॥ ३९ ॥ कुत इत्याह—

तद्भावेऽपि तापाभावेऽभाव इति ॥ ४० ॥ (९८)

तयोः—कषच्छेदयोः भावः—सत्ता तद्भावः तस्मिन्, किं पुनरतद्भाव इत्यपिशब्दार्थः, किमित्याह—'तापाभावे' उक्तलक्षणतापविरहे 'अभावः' परमार्थतः असत्त्वैव परीक्षणीयस्य, न हि तापे विघटमानं हेम कषच्छेदयोः सतोरपि स्वं स्वरूपं प्रतिपत्तुमलं, जातिसुवर्णत्वात्तस्य ॥ ४० ॥एतदपि कथमित्याह—

तच्छुद्धौ हि तत्साफल्यमिति ॥ ४१ ॥ (९९)

'तच्छुद्धौ'—तापशुद्धौ 'हिः' यस्मात् 'तत्साफल्यं' तयोः—कषच्छेदयोः सफलभावः, तथाहि—ध्यानाध्ययनादिकोऽर्थो विधीयमानः प्रागुपात्तकर्मनिर्जरणफलः, हिंसादिकश्च प्रतिषिध्यमानो नवकर्मोपादाननिरोधफलः, बाह्यचेष्टाशु-

धर्मः कषशुद्धः, न पुनः "अन्यधर्मस्थिताः सत्त्वा, असुरा इव विष्णुना। उच्छेदनीयास्तेषां हि, वधे दोषो न विद्यते ॥८९॥" इत्यादिवाक्यगर्भ इति ॥ ३५ ॥ छेदमाह—

तत्सम्भवपालनाचेष्टोक्तिश्छेद इति ॥ ३६ ॥ ( ९४ )

तयोः—विधिप्रतिषेधयोः अनाविर्भूतयोः सम्भवः—प्रादुर्भावः प्रादुर्भूतयोश्च पालना—रक्षारूपा ततः तत्सम्भवपालनार्थं या चेष्टा—भिक्षाटनादिबाह्यक्रियारूपा तस्या उक्तिः—छेदः, यथा कषशुद्धावप्यन्तरामशुद्धिमाशङ्कमानाः सौवर्णिकाः सुवर्णगोलिकादेश्छेदमाद्रियन्ते, तथा कषशुद्धावपि धर्मस्य छेदमपेक्षन्ते, स च छेदो विशुद्धबाह्यचेष्टारूपः, विशुद्धा च चेष्टा सा यत्रासन्तावपि विधिप्रतिषेधावबाधितरूपौ स्वात्मानं लभेते, लब्धात्मानौ चातीचारलक्षणापचारविरहितौ उत्तरोत्तरां वृद्धिमनुभवतः, सा यत्र धर्मे चेष्टा सप्रपञ्चा प्रोच्यते स धर्मश्छेदशुद्ध इति ॥ ३६ ॥ यथा कषच्छेदशुद्धमपि सुवर्णं तापमसहमानं कालिकोन्मीलनदोषान्न सुवर्णभावमश्नुते, एवं धर्मोऽपि कृत्यामपि कषच्छेदशुद्धौ तापपरीक्षामनिर्वहमाणो न स्वभावमासादयत्यतः तापं प्रज्ञापयन्नाह—

उभयनिबन्धनभाववादस्ताप इति ॥ ३७ ॥ ( ९५ )

उभयोः—कषच्छेदयोः अनन्तरमेवोक्तरूपयोः निबन्धनं—परिणामिरूपं कारणं यो भावो—जीवादिलक्षणः तस्य वादः—प्ररूपणा, किमित्याह—तापोऽत्र श्रुतधर्मपरीक्षाधिकारे, इदमुक्तं भवति—यत्र शास्त्रे द्रव्यरूपतया अप्रच्युतानुत्पन्नः, पर्यायात्मकतया च प्रतिक्षणमपरापरस्वभावास्कन्दनेन अनित्यस्वभावो जीवादिरवस्थाप्यते स्यात्तत्र तापशुद्धिः, यतः परिणामिन्येवात्मादौ

दुःखोत्पादस्तथा च संक्लेशः । एष वधो जिनभणितो वर्जयितव्यः प्रयत्नेन ॥ ९३ ॥”

तथा—अनित्ये चापराहिंसनेनेति ॥ ५६ ॥ ( ११४ )

‘ अनित्ये च ’ सर्वथा प्रतिक्षणभङ्गुरे पुनरात्मनि अभ्युपगम्यमाने सति अपरेण—केनचित् लुब्धकादिना अहिंसनेन—अव्यापादनेन कस्यचिच्छूकरादेर्हिंसाऽसंभवः, प्रतिक्षणं भङ्गुरत्वाभ्युपगमे हि सर्वेष्वात्मसु स्वत एव स्वजन्मलाभक्षणानन्तरं सर्वथा निवर्त्तमाने कः कस्य हिंसकः ?,को वा कस्य हिंसनीयः ?;इति ॥ ५६ ॥

तथा—भिन्न एव देहान्न स्पृष्टवेदनमिति ॥ ५७ ॥ ( ११५ )

यदि हि ‘ भिन्न एव ’ विलक्षण एव सर्वथा देहादात्मा तदा ‘न’ नैव स्पृष्टस्य—योषिच्छरीरशयनासनादेः कण्टकज्वलनज्वालादेश्च इष्टानिष्टरूपस्य स्पर्शनेन्द्रियविषयस्य देहेन स्पृश्यमानस्य वेदनम्—अनुभवनं प्राप्नोति भोगिनः पुरुषस्य, न हि देवदत्ते शयनादीनि भोगाङ्गानि स्पृशति विष्णुमित्रस्यानुभवप्रतीतिरस्तीति ॥ ५७ ॥

तथा—निरर्थकश्चानुग्रह इति ॥ ५८ ॥ ( ११६ )

‘ निरर्थकः ’ पुरुषसंतोषलक्षणफलविकलः, चः समुच्चये, अनुग्रहः—स्रक्चन्दनाङ्गनावसनादिभिर्भोगाङ्गैरुपष्टम्भो भवेद्देहस्य, देहादात्मनोऽत्यन्तभिन्नत्वात्, निग्रहस्याप्युपलक्षणमेतत् ॥ ५८ ॥ एवं भेदपक्षं निराकृत्याभेदपक्षनिराकरणायाह—

अभिन्न एवामरणं वैकल्यायोगादिति ॥ ५९ ॥ (११७)

‘अभिन्न एव’ देहात् सर्वथा नानात्वमनालम्बमाने आत्मनि सति ‘चैतन्यविशिष्टः कायः पुरुष’ इति मतावलम्बिनां

नित्यानित्यभिलाभिलआत्मा

कालयोश्च निश्चयनयाभिप्रायेणाभेदादेवमुपन्यस्तं, अन्यथा वर्त्तमानताकल्पं क्रियमाणत्वमित्युपन्यसितुं युक्तं स्यात् ॥ ५२ ॥ यादृशि चात्मनि प्रागुपन्यस्ता बन्धहेतवः उपपद्यन्ते तमन्वयव्यतिरेकाभ्यामाह—

**परिणामिन्यात्मनि हिंसादयो, भिन्नाभिन्ने च देहादिति ॥ ६८ ॥ ( १११ )**

परिणमनं परिणामः—द्रव्यरूपतयाऽवस्थितस्यैव वस्तुनः पर्यायान्तरप्रतिपत्तिः, यथोक्तम्—"परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानम् । न च सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥ ९२ ॥" परिणामो नित्यमस्यास्तीति परिणामी तत्र आत्मनि—जीवे हिंसादयः—प्राग् निरूपिता उपपद्यन्ते, तथा भिन्ने—पृथग्रूपे अभिन्ने च—तद्विपरीते, चकारो विशेषणसमुच्चये, कस्मादित्याह—'देहात्' शरीरात् ॥ ५३ ॥ अत्रैवार्थे विपक्षे बाधामाह—

**अन्यथा तदयोग इति ॥ ५४ ॥ ( ११२ )**

यदि हि परिणामी आत्मा भिन्नाभिन्नश्च देहान्नेष्यते तदा तेषां—हिंसादीनां बन्धहेतुतयोपन्यस्तानामयोगः—अघटना ॥ ५४ ॥ कथमित्याह—

**नित्य एवाविकारतोऽसंभवादिति ॥ ५५ ॥ ( ११३ )**

'नित्य एव' अप्रच्युतानुत्पन्नस्थिरैकस्वभावे आत्मनि, न तु पर्यायनयावलम्बनेनानित्यरूपेऽपीत्येवकारार्थः, अभ्युपगम्यमाने द्रव्यास्तिकनयावष्टम्भतः 'अविकारतः' तिलतुषत्रिभागमात्रमपि पूर्वस्वरूपादप्रच्यवमानत्वेन 'असंभवाद्' अघटनात् हिंसायाः, यतो विवक्षितहिंसा विवक्षितपर्यायविनाशिस्वभावा शास्त्रेषु गीयते, यथोक्तम्—" तत्पर्यायविनाशो

हिंसादयस्तद्योगहेतवः, तदितरे तदितरस्येति ॥ ४९ ॥ (१०७)

'हिंसादय'-इति हिंसानृतादयो जीवपरिणामविशेषाः, किमित्याह-'तद्योगहेतवः' तस्य-बन्धस्य संसारफलत्वेन परमार्थचिन्तायां पापात्मकस्यैव हेतवः-आत्मना सह बन्धकारणभावमापन्ना वर्तन्ते, यदवाचि-"हिंसानृतादयः पञ्च, तत्त्वाश्रद्धानमेव च। क्रोधादयश्च चत्वार, इति पापस्य हेतवः ॥९१॥" (शास्त्रवा०४) तथा 'तदितरे' तेभ्यो-हिंसादिभ्य इतरे--अहिंसादय एव 'तदितरस्य' तस्माद्-बन्धादितरो-मोक्षः तस्य, अनुरूपकारणप्रभवत्वात्सर्वकार्याणामिति ॥ ४९ ॥ बन्धस्यैव स्वरूपमाह—

प्रवाहतोऽनादिमानिति ॥ ५० ॥ (१०८)

'प्रवाहतः'-परम्परातः-'अनादिमान्' आदिभूतबन्धकालविकलः ॥ ५० ॥ अत्रैवार्थे उपचयमाह—

कृतकत्वेऽप्यतीतकालवदुपपत्तिरिति ॥ ५१ ॥ (१०९)

'कृतकत्वेऽपि' स्वहेतुभिर्निष्पादितत्वेऽपि बन्धस्यातीतकालस्येवोपपत्तिः-घटना अनादिमत्त्वस्य वक्तव्या, किमुक्तं भवति?-प्रतिक्षणं क्रियमाणोऽपि बन्धः प्रवाहापेक्षयाऽतीतकालवदनादिमानेव ॥ ५१ ॥ अथ यतोंऽशादनयोर्दृष्टान्तदार्ष्टान्तिकभावोऽभूत् तं साक्षादेव दर्शयन्नाह—

वर्त्तमानताकल्पं कृतकत्वमिति ॥ ५२ ॥ (११०)

यादृशी अतीतकालसमयानां वर्त्तमानता-साम्प्रतरूपता तादृशं बन्धस्य 'कृतकत्वं' क्रियमाणत्वं, क्रियाकालनिष्ठा-

यस्मात्कारणादियं कल्पनैव केवला वितथार्थप्रतिभासरूपा, न पुनस्तत्र प्रतिभासमानोऽर्थोऽपीति, कल्पनामात्रमन्यथा-मुख्यबध्यमानबन्धनयोरभावे वर्त्तते इति ॥ ४७ ॥ बध्यमानबन्धने एव व्याचष्टे—

**बध्यमान आत्मा बन्धनं वस्तुसत् कर्मेति ॥ ४८ ॥ (१०६)**

तत्र 'बध्यमानः' स्वसामर्थ्यतिरोधानेन पारवश्यमानीयमानः, क इत्याह—'आत्मा' चतुर्दशभूतग्रामभेदभिन्नो जीवः प्रतिपाद्यते, तथा—बध्यते मिथ्यात्वादिभिर्हेतुभिरात्मा अनेनेति-बन्धनं, किमित्याह—'वस्तुसत्' परमार्थतो विद्यमानं 'कर्म'-ज्ञानावरणादि अनन्तानन्तपरमाणुप्रचयस्वभावमत एव मूर्त्तप्रकृतीति । अत्रात्मग्रहणेन सांख्यमतनिरासमाह,- यतस्तत्रोच्यते-'आत्मा न बध्यते नापि मुच्यते नापि संसरति कश्चित्, संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः' । वस्तुसद्ग्रहणेन तु सौगतमतस्य, यतस्तत्रापि पठ्यते—''चित्तमेव हि संसारो, रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं, भवान्त इति कथ्यते ॥९०॥'' 'रागादिक्लेशवासित'मिति रागादिक्लेशैः सर्वथा चित्ताद्व्यतिरिक्तैर्वासितं—संस्कृतं, एवं हि बध्यमानान्न भिन्नं वस्तुसत्कर्मेत्यभ्युपगतं भवति । तत्र प्रकृतेरेव बन्धमोक्षाभ्युपगमे आत्मनः संसारापवर्गावस्थयोरभिन्नैकस्वभावत्वेन योगिनां यमनियमाद्यनुष्ठानं मुक्तिफलतयोक्तं यद् योगशास्त्रेषु तद् व्यर्थमेव स्यात्, बौद्धस्यापि चित्ताद्व्यतिरिक्तकर्मवादिनोऽवस्तुसत्त्वमेव कर्मणः स्यात्, यतो यद्यतोऽव्यतिरिक्तस्वरूपं तत्तदेव भवति, न च लोके तदेव तेनैव बध्यते इति प्रतीतिरस्ति, बध्यमानबन्धनयोः पुरुषनिगडादिरूपयोः भिन्नस्वभावयोरेव लोके व्यवह्रियमाणत्वात्, किंच—चित्तमात्रत्वे कर्मणोऽभ्युपगम्यमाने संसारापवर्गयोर्भेदो न प्राप्नोति, चित्तमात्रस्योभयत्राप्यविशेषात् ॥ ४८ ॥ बन्धमोक्षहेतूनेवाह—

ल्याणाशयः प्रधानपरिज्ञानवान् प्ररूप्यमाणार्थपरिज्ञानकुशलः-पुरुषः, ततस्तथाभव्यत्वमादौ येषां ते तथा तेभ्यः असौ—वरबोधिलाभः प्रादुरस्ति, स्वरूपं च जीवादिपदार्थश्रद्धानमस्य ॥ ६८ ॥ अथ फलत एनमेवाह—

ग्रन्थिभेदे नात्यन्तसंक्लेश इति ॥ ६९ ॥ (१२७)

इह ग्रन्थिरिव ग्रन्थिः—दृढो रागद्वेषपरिणामः,तस्य ग्रन्थेः भेदे—अपूर्वकरणवज्रसूच्या विदारणे सति लब्धशुद्धतत्त्वश्रद्धानसामर्थ्यान्नात्यन्तं—न प्रागिवातिनिबिडतया संक्लेशो—रागद्वेषपरिणामः प्रवर्त्तते, न हि लब्धवेधपरिणामो मणिः कथंचिन्मलापूरितरन्ध्रोऽपि प्रागवस्थां प्रतिपद्यत इति ॥ ६९ ॥ एतदपि कुत इत्याह—

न भूयस्तद्बन्धनमिति ॥ ७० ॥ (१२८)

यतो न भूयः—पुनरपि तस्य ग्रन्थेर्बन्धनं—निष्पादनं भेदे सति संपद्यते इति, किमुक्तं भवति?—यावती ग्रन्थिभेदकाले सर्वकर्मणामायुर्वर्जानां स्थितिरन्तःसागरोपमकोटाकोटिलक्षणाऽवशिष्यति, तावत्प्रमाणामेवासौ सम्यगुपलब्धसम्यग्दर्शनो जीवः कथञ्चित् सम्यक्त्वापगमात्तीव्रायामपि तथाविधसंक्लेशप्राप्तौ बध्नाति, न पुनस्तां बन्धेनातिक्रामतीति ॥ ७० ॥

तथा—असत्यपाये न दुर्गतिरिति ॥ ७१ ॥ (१२९)

'असति' अविद्यमाने 'अपाये' विनाशे सम्यग्दर्शनस्य परिशुद्धभव्यत्वपरिपाकसामर्थ्यान्मतिभेदादिकारणानवाप्तौ 'न' नैव 'दुर्गतिः' कुदेवत्वकुमानुषत्वतिर्यक्त्वनारकत्वप्राप्तिः संपद्यते, किंतु सुदेवत्वसुमानुषत्वे एव स्यातात्म्, अन्यत्र पूर्वबद्धायुष्केभ्य इति ॥ ७१ ॥



तां

परिणामपरीक्षेति ॥ ६५ ॥ (१२३)

परिणामस्य—तत्त्ववादविषयज्ञानश्रद्धानलक्षणस्य परीक्षा—एकान्तवादारुचिसूचनवचनसंभाषणादिनोपायेन निर्णयनं विधेयम् ॥ ६५ ॥ ततोऽपि किं कार्यमित्याह—

शुद्धे बन्धभेदकथनमिति ॥ ६६ ॥ (१२४)

'शुद्धे' परमां शुद्धिमागते परिणामे 'बन्धभेदकथनं' बन्धभेदस्य—मूलप्रकृतिबन्धरूपस्याष्टविधस्य उत्तरप्रकृतिबन्धस्वभावस्य च सप्तनवतिप्रमाणस्य (५—९—२—२८—४२—४—२—५) कथनं—प्रज्ञापनं कार्यं, बन्धशतकादिग्रन्थानुसारेणेति॥६६॥

तथा—वरबोधिलाभप्ररूपणेति ॥ ६७ ॥ (१२५)

वरस्य—तीर्थकरलक्षणफलकारणतया शेषबोधिलाभेभ्योऽतिशायिनो बोधिलाभस्य प्ररूपणा—प्रज्ञापना, अथवा वरस्य—द्रव्यबोधिलाभव्यतिरेकिणः पारमार्थिकस्य बोधिलाभस्य प्ररूपणा हेतुतः स्वरूपतः फलतश्चेति ॥ ६७ ॥ तत्र हेतुतस्तावदाह—

तथाभव्यत्वादितोऽसाविति ॥ ६८ ॥ (१२६)

भव्यत्वं नाम—सिद्धिगमनयोग्यत्वमनादिपारिणामिको भावः आत्मसतत्त्वमेव, तथाभव्यत्वं तु भव्यत्वमेव कालादिभेदेनात्मनां बीजसिद्धिभावात् नानारूपतामापन्नं, आदिशब्दात्कालनियतिकर्मपुरुषपरिग्रहः, तत्र कालो विशिष्टपुद्गलपरावर्त्तोत्सर्पिण्यादिः तथाभव्यत्वस्य फलदानाभिमुख्यकारी, वसन्तादिवद् वनस्पतिविशेषस्य, कालसद्भावेऽपि न्यूनाधिकव्यपोहेन नियतकार्यकारिणी-नियतिः, अपचीयमानसंक्लेशं नानाशुभाशयसंवेदनहेतुः-कुशलानुबन्धि कर्म, समुचितपुण्यसंभारो महाक्र-

तथा—आत्मकृतस्य देहेनेति ॥ ६२ ॥ (१२०)

यदि च देहाद् भिन्न एव आत्मेत्यभ्युपगमः तदा 'आत्मकृतस्य' कुशलादकुशलाद्वाऽनुष्ठानादात्मसमुपार्जितस्य शुभस्याशुभस्य च कर्मण इहामुत्र च देहेन कर्त्राऽनुपभोगः—अवेदनं प्रसज्यते, अन्यकृतत्वात् ॥ ६२ ॥ यदि नामैवमापद्यते तथापि को दोष इत्याह—

दृष्टेष्टबाधेति ॥ ६३ ॥ (१२१)

दृष्टस्य—सर्वलोकप्रतीतस्य देहकृतस्यात्मना आत्मकृतस्य च देहेन यः सुखदुःखानुभवः तस्य इष्टस्य च—शास्त्रसिद्धस्य बाधा—अपह्नवः प्राप्नोति, तथाहि—दृश्यत एवात्मा देहकृतचौर्यपारदार्यादिनार्यकार्याचारकादौ चिरं शोकविषादादीनि दुःखानि समुपलभमानः शरीरं च तथाविधमनःसंक्षोभादापन्नज्वरादिजनितव्यथामनुभवति, न च दृष्टेष्टापलापिता युक्ता सतां, नास्तिकलक्षणत्वात्तस्याः ॥ ६३ ॥ इत्थं सर्वथा नित्यमनित्यं च तथा देहाद् भिन्नमभिन्नं चात्मानमङ्गीकृत्य हिंसादीनामसम्भवमापाद्योपसंहरन्नाह—

अतोऽन्यथैतत्सिद्धिरिति तत्त्ववाद इति ॥ ६४ ॥ (१२२)

'अतः' एकान्तवादाद् 'अन्यथा' नित्यानित्यादिस्वरूपे आत्मनि समभ्युपगम्यमाने 'एतत्सिद्धिः' हिंसादिसिद्धिः, तत्सिद्धौ च तन्निबन्धना बन्धमोक्षसिद्धिः, 'इति' एष तत्त्ववाद इति प्रतिज्ञायते, योऽतत्त्ववादिना पुरुषेण वेदितुं न पार्यते इति ॥ ६४ ॥ तत्त्ववादे निरूपिते किं कार्यमित्याह—

सुरगुरुशिष्याणामभ्युपगमेन, किमित्याह—'अमरणं' मृत्योरभावः आपद्यत आत्मनः, कुत इत्याह—वैकल्यस्यायोगाद्—अघटनात्, यतो मृतेऽपि देहे न किञ्चित्पृथिव्यादिभूतानां देहारम्भकाणां वैकल्यमुपलभ्यते, वायोस्तत्र वैकल्यमिति चेन्न, वायुमन्तरेण उच्छूनभावायोगात्, तर्हि तेजसः तत्र वैकल्यमस्तीति चेन्न, तेजसो व्यतिरेकेण कुथितभावाप्रतिपत्तेरिति कथं देहाभिन्नात्मवादिनां मरणमुपपन्नं भवेदिति ॥ ५९ ॥ प्राक्तनावस्थयोर्वायुतेजसोस्तत्राभावात् मरणमुपपद्यते इति चेदुच्यते—

मरणे परलोकाभाव इति ॥ ६० ॥ (११८)

मरणे अभ्युपगम्यमाने परलोकस्याभावः प्रसज्यते, न हि देहादभिन्न एवात्मन्यभ्युपगम्यमाने कश्चित्परलोकयायी सिद्ध्यति, देहस्यात्रैव तावत् पातदर्शनात् तद्व्यतिरिक्तस्य चात्मनोऽनभ्युपगमात्, न च वक्तव्यं—परलोक एव तर्हि नास्ति, तस्य सर्वशिष्टैः प्रमाणोपष्टम्भोपपन्नत्वेनाभीष्टत्वात्, प्रमाणं चेदं—यो योऽभिलाषः स सोऽभिलाषान्तरपूर्वको दृष्टः, यथा यौवनकालाभिलाषो बालकालीनाभिलाषपूर्वकः, अभिलाषश्च बालस्य तदहर्जातस्य प्रसारितलोचनस्य मातुः स्तनौ निभालयतः स्तन्यस्पृहारूपः, यच्च तदभिलाषान्तरं तन्नियमाद्भवान्तरभावीति ॥ ६० ॥

तथा—देहकृतस्यात्मनाऽनुपभोग इति ॥ ६१ ॥ (११९)

एकान्तभेदे देहात्मनोरभ्युपगते सांख्येन देहेन कृतस्य—परेषां ताडनतर्जनहिंसनादिना देवतानमनस्तवनादिना चोपायेनोपात्तस्य शुभाशुभरूपस्य कर्मणः आत्मना 'अनुपभोगः' सुखदुःखानुभवद्वारेणावेदनमापद्यते, न हि कश्चिदन्यकृतं शुभमशुभं वा वेदयितुमर्हति, कृतनाशाकृताभ्यागमदोषप्रसङ्गादिति ॥ ६२ ॥

धर्मोपादेयतां ज्ञात्वा, संजातेच्छोऽत्र भावतः । दृढं स्वशक्तिमालोच्य, ग्रहणे संप्रवर्त्तते ॥ १४ ॥

'सद्धर्मश्रवणात्'-पारमार्थिकधर्माकर्णनात् 'एवम्' उक्तरीत्या 'नरः' श्रोता पुमान् 'विगतकल्मषः' व्यावृत्तत-त्त्वप्रतिपत्तिबाधकमिथ्यात्वमोहादिमालिन्यः सन्, अत एव 'ज्ञाततत्त्वः'-करकमलतलकलितनिस्तलस्थूलामलमुक्ताफलवच्छा-स्त्रलोचनबलेनालोकितसकलजीवादिवस्तुवादः तथा महत्-शुद्धश्रद्धानोन्मीलनेन प्रशस्यं सत्त्वं-पराक्रमो यस्य स तथा 'परं' प्रकृष्टं 'संवेगम्' उक्तलक्षणमागतः-अवतीर्णः ॥ अवतीर्णः सन् किं करोतीत्याह-'धर्मोपादे' इत्यादि,

'धर्मोपादेयतां' "एक एव सुहृद्धर्मो, मृतमप्यनुयाति यः । शरीरेण समं नाशं, सर्वमन्यत्तु गच्छति ॥ ९८ ॥ इत्यादिवचनात् धर्मोपादेयभावं 'ज्ञात्वा' अवगम्य 'संजातेच्छः' लब्धचिकीर्षापरिणामः 'अत्र'-धर्मे, 'दृढम्'-अतिसूक्ष्माभोगेन 'स्वशक्तिं'-स्वसामर्थ्यमालोच्य-विमृश्य 'ग्रहणे' वक्ष्यमाणयोगवन्दनादिशुद्धिविधिना प्रतिपत्तावस्यैव धर्मस्य 'संप्रवर्त्तते'-सम्यक्प्रवृत्तिमाधत्ते, अदृढालोचने हि अयथाशक्ति धर्मग्रहणप्रवृत्तौ भङ्गसंभवेन प्रत्युतानर्थभाव इति दृढग्रहणं कृतमिति ॥ ननु किमर्थमस्यैव धर्मग्रहणसंप्रवृत्तिर्भण्यते इत्याशङ्क्याह—

योग्यो ह्येवंविधः प्रोक्तो, जिनैः परहितोद्यतैः । फलसाधनभावेन, नातोऽन्यः परमार्थतः ॥ १५ ॥

'योग्यो' अर्हो भव्य इति योऽर्थः 'हि' यस्माद् 'एवंविधः' सद्धर्मश्रवणादित्यादि ( १३-१४ ) ग्रन्थोक्तविशेषणयुक्तः पुमान् धर्मप्रतिपत्तेः प्रोक्तः, कैरित्याह-'जिनैः' अर्हद्भिः 'परहितोद्यतैः' सकलजीवलोककुशलाधानधनैः, केन कारणेनेत्याह-'फलसाधनभावेन' 'योग्यस्यैव धर्मग्रहणफलं प्रति साधकभावोपपत्तेः, व्यतिरेकमाह-'न' नैव 'अतः' धर्मग्रहीतुः

'अबोधेऽपि'-अनवगमेऽपि सम्यग्धर्मस्य 'फलं' क्लिष्टकर्मनिर्जरालक्षणं प्रोक्तं, केषामनवबोधे इत्याह-' श्रोतृणां'-श्रावकाणां, कैरुक्तमित्याह-'मुनिसत्तमैः'-भगवद्भिरर्हद्भिः, 'कथकस्य'-धर्मदेशकस्य साधोः, 'विधानेन' बालमध्यमबुद्धिबुधरूपश्रोतृजनापेक्षालक्षणेन, 'नियमाद्'- अवश्यंतया, कीदृशस्य कथकस्येत्याह-'शुद्धचेतसः'-परानुग्रहप्रवृत्तिपरिणामस्येति ॥ ११ ॥ आह-प्रकारान्तरेणापि देशनाफलस्य संभाव्यमानत्वादलमिहैव यत्नेनेत्याशङ्क्याह-

नोपकारो जगत्यस्मिंस्तादृशो विद्यते क्वचित्। यादृशी दुःखविच्छेदाद्देहिनां धर्मदेशना ॥ १२ ॥

'न'-नैव, 'उपकारः'-अनुग्रहो, 'जगति'-भुवने, 'अस्मिन्' उपलभ्यमाने तादृशो 'विद्यते' समस्ति 'क्वचित्' काले क्षेत्रे वा 'यादृशी' यादृग्रूपा 'दुःखविच्छेदात्' शारीरमानसदुःखापनयनात् 'देहिनां' देशनार्हाणां 'धर्मदेशने'ति धर्मदेशनाजनितो मार्गश्रद्धानादिर्गुणः, तस्य निःशेषक्लेशलेशाकलङ्कमोक्षाक्षेपं प्रत्यवन्ध्यकारणत्वादिति ॥ इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ देशनाविधिर्नाम द्वितीयोऽध्यायः समाप्तः ॥ १२ ॥

# अथ तृतीयः अध्यायः

व्याख्यातो द्वितीयोऽध्यायः, अथ तृतीय आरभ्यते, तस्य चेदमादिसूत्रम्—

सद्धर्मश्रवणादेवं, नरो विगतकल्मषः। ज्ञाततत्त्वो महासत्त्वः, परं संवेगमागतः ॥ १३ ॥

'सः' अपवर्गः अत्यन्तं-सकलदुःखशक्तिनिर्मूलनेन भवतीति आत्यन्तिको 'दुःखविगमः' सर्वशारीरमानसाशर्मविरहः सर्वजीवलोकासाधारणानन्दानुभवश्चेति ॥ ७७ ॥इत्थं देशनाविधिं प्रपञ्च्योपसंहरन्नाह–

**एवं संवेगकृद्धर्मं, आख्येयो मुनिना परः। यथाबोधं हि शुश्रूषोर्भावितेन महात्मना ॥ १० ॥**

'एवम्'- उक्तन्यायेन 'संवेगकृत्' सवेगकारी देशनार्हप्राणिनः, संवेगलक्षणं चेदम्–"तथ्ये धर्मे ध्वस्तहिंसाप्रवन्धे, देवे रागद्वेषमोहादिमुक्ते। साधौ सर्वग्रन्थसंदर्भहीने, संवेगोऽसौ निश्चलो योऽनुरागः" ॥९६॥ (शालिनीवृत्तम्) (योगवि. वृ. २९०) 'धर्मः'-उक्तलक्षणः, 'आख्येयः'-प्रज्ञापनीयो 'मुनिना' गीतार्थेन साधुना, अन्यस्य धर्ममुपदेष्टुमनधिकारित्वात्, यथोक्तं निशीथे–"संसारदुक्खमहणो विवोहणो भवियपुंडरीयाणं। धम्मो जिणपन्नत्तो पकप्पजइणा कहेयव्वो ॥९७॥" प्रकल्पयतिना इति–अधीतनिशीथाध्ययनेनेति। 'परः'-शेषतीर्थान्तरीयधर्मातिशायितया प्रकृष्टः, कथमाख्येय इत्याह–'यथाबोधं ही' ति यथाववोधमेव, अनवबोधे धर्माख्यानस्योन्मार्गदेशनारूपत्वेन प्रत्युतानर्थसंभवात्. पठितं च–'न ह्यन्धेनान्धः समाकृष्यमाणः सम्यगध्वानं प्रतिपद्यत' इति, कीदृशस्य सत इत्याह–'शुश्रूषोः' श्रोतुमुपस्थितस्य, कीदृशेन मुनिनेत्याह–'भावितेन' आख्यायमानधर्मप्रतिबद्धवासनावासितेन, 'भावाद् भावप्रसूति' रिति वचनात्, भाविताख्यानस्य श्रोतुः तथाविधश्रद्धानादिनिबन्धनत्वात्, पुनरपि कीदृशेनेत्याह–'महात्मना' तदनुग्रहैकपरायणतया महान्-प्रशस्य आत्मा यस्य स तथा तेनेति ॥१०॥ आह–धर्माख्यानेऽपि यदि तथाविधकर्मदोषान्नाववोधः श्रोतुरुत्पद्यते तदा किंफलं धर्माख्यानमित्याह–

**अबोधेऽपि फलं प्रोक्तं, श्रोतृणां मुनिसत्तमैः। कथकस्य विधानेन, नियमाच्छुद्धचेतसः ॥ ११ ॥**

देशना-श्युप संहारः

तथा–विशुद्धेश्चारित्रमिति ॥ ७२ ॥ (१३०)

'विशुद्धे' परिशुद्धनिःशङ्कितत्वाद्दर्शनाचारवारिपूरप्रक्षालितशङ्कादिपङ्कतया प्रकर्षप्राप्तिलक्षणायाः सम्यग्दर्शनसत्तायाः सकाशात्, किमित्याह–'चारित्रं' सर्वसावद्ययोगपरिहारनिरवद्ययोगसमाचाररूपं संपद्यते, शुद्धसम्यक्त्वस्यैव चारित्ररूपत्वात्, तथा चाचारसूत्रम्–" जं मोणंति पासहा तं सम्मंति पासहा । जं सम्मंति पासहा तं मोणंति पासह " त्ति

भावनातो रागादिक्षय इति ॥ ७३ ॥ (१३१)

भाव्यन्ते–मुमुक्षुभिरभ्यस्यन्ते निरन्तरमेता इति भावनाः, ताश्चानित्यत्वाशरणत्वादयो द्वादश, यथोक्तम्–" भावयितव्यमनित्यत्व १ मशरणत्वं २ तथैकता ३ न्यत्वे ४ । अशुचित्वं ५ संसारः ६ कर्माश्रव ७ संवरविधिश्च ८ ॥९४॥ निर्जरण ९–लोकविस्तर १० धर्मस्वाख्याततत्त्वचिन्ताश्च ११ । बोधेः सुदुर्लभत्वं १२ च भावना द्वादश विशुद्धाः ॥९५॥" (प्रशम.१४९–१५० ) ताभ्यो 'रागादिक्षयः' रागद्वेषमोहमलप्रलयः संजायते, सम्यक्चिकित्साया इव वातपित्तादिरोगापगमः प्रचण्डपवनाद्वा यथा मेघमण्डलविघटनं, रागादिप्रतिपक्षभूतत्वाद् भावनानामिति ॥ ७३ ॥ ततोऽपि किमित्याह—

तद्भावेऽपवर्ग इति ॥ ७४ ॥ (१३२)

तस्य–रागादिक्षयस्य भावे सकललोकालोकविलोकनशालिनोः केवलज्ञानदर्शनयोः लब्धौ सत्यां निस्तीर्णभवार्णवस्य सतो जन्तोः ' अपवर्ग ' उक्तनिरुक्त उद्भवतीति ॥ ७४ ॥ किंलक्षण इत्याह—

स आत्यन्तिको दुःखविगम इति ॥ ७५ ॥ (१३३)

'अनुमतिः' अनुज्ञादोषः चकारो दूषणान्तरसमुच्चये 'इतरत्र' अणुव्रतादिप्रतिपत्तौ प्रत्याख्यातसावद्यांशात् योऽन्यः अप्रत्याख्यातः सावद्यांशः तत्रापद्यते, तथा च यावज्जीवं सर्वथा सावद्यपरिहारप्रतिज्ञाया मनाग् मालिन्यं स्यादिति तत्कथनपूर्वकमित्युक्तम् ॥ १० ॥अथैतद्व्यतिरेके दोषमाह–

अकथन उभयाफल आज्ञाभङ्ग इति ॥ ११ ॥ (१४४)

यदि उत्तमधर्मप्रतिपत्त्यसहिष्णोः अणुव्रतादिलक्षणं धर्मं न कथयति गुरुः तदा अकथने उभयं–यतिश्राद्धधर्मलक्षणं न फलं यस्यासौ उभयाफलः 'आज्ञाभङ्गः' भगवच्छासनविनाशनमत्यन्तदुरन्तं जायत इति । भगवदाज्ञा चेयम्–"श्रममविचिन्त्यात्मगतं तस्माच्छ्रेयः सदोपदेष्टव्यम् । आत्मानं च परं च हि हितोपदेष्टाऽनुगृह्णाति ॥१०२॥" इति ॥ ननु सर्वसावद्ययोगप्रत्याख्यानाक्षमस्याणुव्रतादिप्रतिपत्तौ सावद्यांशप्रत्याख्यानप्रदाने कथमितरत्रांशे नानुमतिदोषप्रसङ्गो गुरोः इत्याशङ्क्याह–

भगवद्वचनप्रामाण्यादुपस्थितदाने दोषाभाव इति ॥ १२ ॥ (१४५)

उपासकदशादौ हि भगवता स्वयमेवानन्दादिश्रमणोपासकानामणुव्रतादिप्रदानमनुष्ठितमिति श्रूयते, नच भगवतोऽपि तत्रानुमतिप्रसङ्ग इति प्रेर्यं, भगवदनुष्ठानस्य सर्वाङ्गसुन्दरत्वेनैकान्ततो दोषविकलत्वात्, भगवतो वचनस्य प्रामाण्यादुपस्थितस्य–ग्रहीतुमुद्यतस्य जन्तोरणुव्रतादिप्रदाने साक्षिमात्रभावमवलम्बमानस्य सावद्यांशानिरोधेऽपि नानुमतिप्रसङ्गो गुरोः, प्रागेव तस्य स्वयमेव तत्र प्रवृत्तत्वादिति ॥ १२ ॥ कुत एतदिति चेदुच्यते–

गृहपतिपुत्रमोक्षज्ञातादिति ॥ १३–१४६ ॥

प्रशमः—स्वभावत एव क्रोधादिक्रूरकषायविषविकारकटुफलावलोकनेन वा तन्निरोधः संवेगो—निर्वाणाभिलाषः नि-र्वेदो—भवादुद्वेजनं अनुकम्पा—दुःखितसत्त्वविषया कृपा आस्तिक्यं—' तदेव सत्यं निःशंकं यज्जिनैः प्रवेदित 'मिति प्रतिपत्तिल-क्षणं ततः प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यानामभिव्यक्तिः—उन्मीलनं लक्षणं—स्वरूपसत्ताख्यापकं यस्य तत्तथा ' तदि 'ति सम्यग्दर्शनम् ॥ ७ ॥ एवं सम्यग्दर्शनशुद्धौ यद् गुरुणा विधेयं तदाह—

' उत्तमधर्मप्रतिपत्त्यसहिष्णोस्तत्कथनपूर्वमुपस्थितस्य विधिनाऽणुव्रतादिदानमिति ॥ ८ ॥ (१४१)

इह भव्यस्य भवभीरोर्धर्मग्रहणोद्यममवलम्बमानस्य गुरुणा प्रथमं क्षमामार्दवादिर्यतिधर्मः सप्रपञ्चमुपवर्ण्य प्रदातुमुपस्था-पनीयः, तस्यैव सर्वकर्मरोगविरेचकत्वात्, यदा चासावद्यापि विषयसुखपिपासादिभिरुत्तमस्य क्षमामार्दवादेर्यतिधर्मस्य प्रति-पत्तिः—अभ्युपगमः तस्यामसहिष्णुः—अक्षमः तदा तस्य ' तत्कथनपूर्वं ' स्वरूपभेदादिभिस्तेषाम्—अणुव्रतादीनां कथनं—प्रका-शनं पूर्वं—प्रथमं यत्र तत्तथा, क्रियाविशेषणमेतत्, ' उपस्थितस्य ' गृहीतुमभ्युद्यतस्य, किमित्याह—' विधिना ' वक्ष्यमाणे-नाणुव्रतादिदानं कर्त्तव्यमिति ॥ ८ ॥ अन्यथा प्रदाने दोषमाह—

सहिष्णोः प्रयोगेऽन्तराय इति ॥ ९ ॥ (१४२)

' सहिष्णोः ' उत्तमधर्मप्रतिपत्तिसमर्थस्य ' प्रयोगे ' अणुव्रतादिप्रदानव्यापारणे अन्तरायः चारित्रप्रतिपत्तेः कृतो गुरुणा भवति, स च भवान्तरे आत्मनश्चारित्रदुर्लभत्वनिमित्तमिति ॥ ९ ॥ अत्रैवोपचयमाह—

' अनुमतिश्चेतरत्रेति ॥ १० ॥ (१४३)

णविधिमेवादौ विभणिषुरिदमाह—

सति सम्यग्दर्शने न्याय्यमणुव्रतादीनां ग्रहणं, नान्यथेति ॥ ५ ॥ (१३८)

'सति' विद्यमाने 'सम्यग्दर्शने' सम्यक्त्वलक्षणे 'न्याय्यं' उपपन्नं 'अणुव्रतादीनां' अणुव्रतगुणव्रतशिक्षाव्रतानां 'ग्रहणं' अभ्युपगमः, 'न' नैव 'अन्यथा' सम्यग्दर्शने असति, निष्फलत्वप्रसङ्गात्, यथोक्तम्—"सस्यानीवोषरे क्षेत्रे, निक्षिप्तानि कदाचन। न व्रतानि प्ररोहन्ति, जीवे मिथ्यात्ववासिते॥९९॥ संयमा नियमाः सर्वे, नाश्यन्तेऽनेन पावनाः। क्षयकालानलेनेव, पादपाः फलशालिनः॥ १०० ॥" सम्यग्दर्शनमेव यथा स्यात्तथाऽऽह—

जिनवचनश्रवणादेः कर्मक्षयोपशमादितः सम्यग्दर्शनमिति ॥ ६ ॥ (१३९)

जिनवचनश्रवणं—प्रतीतरूपमेव, आदिशब्दात्तथाभव्यत्वपरिपाकापादितो जीववीर्यविशेषलक्षणो निसर्गो गृह्यते, ततो जिनवचनश्रवणादेः सकाशात् यः 'कर्मक्षयोपशमादिः'—कर्मणः—ज्ञानावरणदर्शनावरणमिथ्यात्वमोहादेः क्षयोपशमोपशमक्षयलक्षणो गुणः तस्मात् 'सम्यग्दर्शनं' तत्त्वश्रद्धानलक्षणं विपर्ययव्यावृत्तिकारि असदभिनिवेशशून्यं शुद्धवस्तुप्रज्ञापनानुगतं निवृत्ततीव्रसंक्लेशं उत्कृष्टबन्धाभावकृत् शुभात्मपरिणामरूपं समुज्जृम्भते, कर्मक्षयादिरूपं चेत्थमवसेयं—"खीणो निव्वायहुआसणो व्व छारपिहियव्व उवसंतो। दरविज्झायविहाडियजलणोवम्मा खओवसमा ॥ १०१ ॥ 'विघाटित' इति इतस्ततो विप्रकीर्ण इति ॥ ७ ॥ कीदृशमित्याह—

प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं तदिति ॥ ७ ॥ (१४०)

सम्यग्दर्शनस्यावश्यकता लक्षणं च

'अन्यः'–पूर्वश्लोकद्वयोक्तविशेषणविकलः,' परमार्थतः'–तत्त्ववृत्त्या योग्य इति ॥

इति सद्धर्मग्रहणार्ह उक्तः, साम्प्रतं तत्प्रदानविधिमनुवर्णयिष्याम इति ॥ १ ॥ (१३४)

एतत्सुगममेव ॥ १ ॥ ननु धर्मः स्वचित्तपरिशुद्ध्यधीनः तत्किमस्यैवं ग्रहणेनेत्याशंक्याह–

धर्मग्रहणं हि सत्प्रतिपत्तिमद्विमलभावकारणमिति ॥ २ ॥ (१३५)

'धर्मग्रहणम्' उक्तलक्षणं 'हिः'यस्मात् 'सत्प्रतिपत्तिमत्'–दृढशक्तिपर्यालोचनादिना शुद्धाभ्युपगमवत्, किमित्याह–'विमलभावकारणं' स्वफलप्रसाधनावन्ध्यपरिणामनिमित्तं संपद्यते इत्येवमस्य ग्रहणविधिर्वक्तुमुपक्रम्यते इति ॥२॥ तदेव कथं संपद्यते इत्याह—

तच्च प्रायो जिनवचनतो विधिनेति ॥ ३ ॥ (१३६)

'तच्च' तत्पुनः सत्प्रतिपत्तिमद्धर्मग्रहणं 'प्रायो' वाहुल्येन, मरुदेव्यादौ क्वचिदन्यथापि संभवात्, 'जिनवचनतो' वीतरागराद्धान्तात् यो विधिर्वक्ष्यमाणः तेन संपद्यत इति ॥ ३ ॥ एवं सति यत् संजायते तदाह—

इति प्रदानफलवत्तेति ॥ ४ ॥ (१३७)

'इति'एवं सत्प्रतिपत्तिमतो विधिना धर्मग्रहणस्य विमलभावनिवन्धनतायां सत्यां प्रदानस्य-वितरणस्य धर्मगोचरस्य गुरुणा क्रियमाणस्य शिष्याय फलवत्ता–शिष्यानुग्रहरूपफलयुक्तत्वमुपपद्यते, अन्यथोपरवसुन्धरावीजवपनमिव निष्फलमेव स्यादिति ॥ ४ ॥ भागविशेषतो धर्मो आद्यतयोक्तः, तत्र च प्रायोऽभ्यस्तश्रावकधर्मो यतिधर्मयोग्यो भवतीति गृहस्थधर्मग्रह-

भूतकोपोद्रेको महीपतिर्ज्येष्ठपुत्रमेकं मुमोचेति। अयमत्रार्थोपनयः—यथा तद्वसन्तपुरं नगरं तथा संसारः, यथा राजा तथा श्रावकः, यथा श्रेष्ठी तथा गुरुः, यथा च षट् पुत्रास्तथा षट् जीवनिकायाः; यथा च तस्य पितुः शेषपुत्रोपेक्षणेनैकं पुत्रं मोचयतोऽपि न शेषपुत्रवधानुमतिः एवं गुरुर्निजपुत्रप्रायान् षडपि जीवनिकायांस्तैस्तैः प्रव्रज्योत्साहनोपायैर्गृहस्थतया तद्वधप्रवृत्तात् श्रावकात् मोचयति, यदा चासौ नाद्यापि तान् मोक्तुमुत्सहते तदा ज्येष्ठपुत्रप्रायं त्रसकायं शेषोपेक्षणेन मोचयतोऽपि गुरोर्न शेषकायवधानुमतिदोष इति ॥ १३ ॥ विधिनाऽणुव्रतादिप्रदानमित्युक्तं प्रागतस्तमेव दर्शयति—

योगवंदननिमित्तदिगाकारशुद्धिर्विधिरिति ॥ १४ ॥ ( १४७ )

इह शुद्धिशब्दः प्रत्येकमभिसंबध्यते, ततो योगशुद्धिर्वन्दनशुद्धिर्निमित्तशुद्धिर्दिक्शुद्धिराकारशुद्धिश्च विधिः अणुव्रतादिप्रतिपत्तौ भवति, तत्र योगाः—कायवाङ्मनोव्यापारलक्षणाः तेषां शुद्धिः—सोपयोगान्तरगमनं निरवद्यभाषणं शुभचिन्तनादिरूपा, वन्दनशुद्धिः—अस्खलितामिलितप्रणिपातादिदण्डकसमुच्चारणासंभ्रान्तकायोत्सर्गकरणलक्षणा, निमित्तशुद्धिः—तत्कालोच्छलितशङ्खपणवादिनिनादश्रवणपूर्णकुम्भभृङ्गारच्छत्रध्वजचामराद्यवलोकनशुभगन्धाघ्राणादिस्वभावा, दिक्शुद्धिः—प्राच्युदीचीजिनजिनचैत्याद्यधिष्ठिताशासमाश्रयणस्वरूपा, आकारशुद्धिस्तु-राजाद्यभियोगादिप्रत्याख्यानापवादमुक्तीकरणात्मिकेति ॥१४॥

तथा उचितोपचारश्चेति ॥ १५ ॥ ( १४८ )

उचितो—देवगुरुसाधर्मिकस्वजनदीनानाथादीनामुपचारार्हाणां यो यस्य योग्य उपचारो—धूपपुष्पवस्त्रविलेपनासनदानादिगौरवात्मकः, स च विधिरित्यनुवर्त्तत इति ॥ १५ ॥ अथाणुव्रतादीन्येव क्रमेण दर्शयन्नाह—

हृद्यान्तर्गतगुप्तभूमिगृहैकदेशे निलिल्यिरे, धारिण्यपि रात्रौ कृतोदारशृङ्गाराऽन्तःपुरेण सह निर्गतनरे नगरे यथाभिप्रायमभिरेमे, संजाते च प्रातः समये समुत्थिते कमलखण्डप्रबोधप्रदानप्रवणे किंशुककुसुमसच्छायातुच्छोच्छलद्रागरञ्जितदिग्मण्डले जगदेकनेत्रे मित्रे नगराभ्यन्तरमप्रविष्टेष्वेव पुरुषेषु महीपालो नगरारक्षकानादिदेश यथा—निभालयत नगरं मा न कश्चिदस्मदाज्ञाभङ्गकारी मानवः समजनीति, सम्यग्गवेषयद्भिश्च तैः कृतान्तदूतैरिव प्रापिरे श्रेष्ठिनन्दनाः निवेदिताश्च तत्समयमेव राज्ञः, ततोऽसौ कुपितकृतान्तभीषणभृकुटिभङ्गसङ्गिललाटपट्टमाधाय तच्छ्रेष्ठिपुत्रवधाय तान् व्यापारयांचकार, अत्रान्तरे समाकर्ण्याकाण्डे एव मुद्गराघातपातसदृशमेनं वृत्तान्तं श्रेष्ठी शान्त इव भ्रान्त इव पीडित इव करिमकरनिकरकरास्फालनसमुच्छलद्बहलकल्लोलाकुलितमहाजलनिधिमध्यसंभिन्नयानपात्रान्तर्लीयमानमानव इव किंकर्त्तव्यतामूढः क्षणं कामप्यवस्थां दारुणामन्वभूत्, तदनु निराकृत्य कातरनरविलसितं,अपास्य स्त्रीजनोचितं शोकावेगं,समालम्ब्य धीरनरोचितं धैर्यं,अवगणय्य दीनभावं,नगरप्रधानलोकसहायः प्रवररत्नभृतभाजनव्यग्रपाणिः सहसैव राज्ञो विज्ञापनायोपतस्थौ, विज्ञप्तवांश्च यथा-देव! न कुतोऽपि चित्तदोषादमी मत्पुत्रा नगरान्निर्गमभाजो बभूवुः, किंतु तथाविधलेख्यव्यग्रतया निर्गन्तुमपारयतामादित्यास्तमयसमयागमे च प्रचलितानामप्यमीषां प्रतोलीद्वारपिधानवशेन निर्गमो नाभूत्, अतः क्षम्यतामेकोऽपराधः, क्रियतां प्रियपुत्रजीवितव्यप्रदानेन प्रसादः, एवं च पुनः पुनः भण्यमानोऽपि राजा अवन्ध्यकोपमात्मानं मन्यमानो यदा न मोक्तुमुत्सहते तदा तत्कोपनिर्वापणायैकपुत्रोपेक्षणेन पञ्च मोचयितुमारब्धाः, यदा तानपि न मुञ्चति तदा द्वयोरुपेक्षणेनैव चत्वारः, एवं तदमोचनेऽपि त्रयो द्वौ यावच्छेषोपेक्षणेन एको ज्येष्ठ इति, ततः संनिहितामात्यपुरोहिताद्यत्यन्ताभ्यर्थनेन निर्मूलकुलोच्छेदो महते पापायेति पर्यालोचनेन च मनाग् मन्दी-

नदेव–सोमदेव–पूर्णभद्र–माणिभद्रनामानः षट्, ते च निसर्गतः एव गुरुजनविनयपरायणाः परमकल्याणप्रदानप्रवणपरिशुद्धत्रिवर्गबद्धानुरागाः अनुरागभरसमाकृष्यमाणकीर्त्तिकामिनीव।ढौपगूढाः सकलसज्जनमनःसंतोषकातुच्छसमुच्छलद्दयादाक्षिण्यप्रायप्राज्यगुणालङ्कृतशरीराः शरीरसौन्दर्योत्कर्षतिरस्कृतमकरकेतनलावण्यदर्पातिरेकाः वणिग्जनोचितव्यवहारसारतया पितरमतिदूरमतिक्रान्तकुटुम्बचिन्ताभारमकार्षुः। अन्यदा च धारिणी देवी अन्तःपुरान्तः नरपतौ पट्टपटहप्रवादनप्रवृत्ते अनेककरणभङ्गसङ्गसुन्दरं राजहृदयानन्दातिरेकदायकं नृत्यविधिं व्यधात्, ततः संतोषभरतरलितमनाः महीपतिः प्रियायै वरं प्रायच्छत्, सा चोवाच–यथा देव! अद्यापि तवान्तिक एव वरस्तिष्ठतु, प्रस्तावे याचिष्यत इति, एवं च गच्छति काले समाययौ अन्यदा कामुकलोकविलासोल्लाससाहाय्यकारी कौमुदीदिवसः, विज्ञप्तश्च देव्या वसुन्धराधिपतिः–देव! क्रियतां वरेण प्रसादः यथाऽद्य कर्पूरपूरप्रतिभशशधरकरनिकरपरिपूरितनिखिलाशायां निशायामियां नगरीं गरीयसा स्वपरिवारेण शेषान्तःपुरेण च परिकरिता सती त्रिकचतुष्कादिरमणीयप्रदेशसौन्दर्यावलोकनकुतूहलेनास्खलितप्रसरा परिभ्रमामीति, तदन्वेष राजा सर्वत्र नगरे पटहप्रदानपूर्वकं सकलपुरुषव्यक्तीनां रजनीनगरनिर्वासनाज्ञामुद्घोषयामास, ततः प्रातःक्षणादारभ्य यथासंवाहं सर्वेष्वपि पुरुषेषु नगराद्बहिर्गन्तुं प्रवृत्तेषु समुचितसमये स्वयमेव महीपतिर्मन्त्रिप्रमुखनगरप्रधाननरपरिकरितो नगराद्बहिरैशानादिग्भागवर्त्तिनि मनोरमोद्याने जगाम, ते च षडपि श्रेष्ठिसूनवो लेख्यककरणव्यग्रा एते व्रजाम एते व्रजाम इति निबिडबद्धाभिसन्धयोऽपि सन्ध्यासमयं यावदापण एव तस्थुः। इतश्चास्ताचलचूडामलञ्चकार सहस्रकरः, ते च त्वरापरिगता यावदायान्ति गोपुरसमीपे तावत्तज्जीविताशयेव सहोभयकपाटपुटसङ्घटनेन निरुद्धानि प्रतोलीद्वाराणि, तदनु चकितचकिताः केनाप्यलक्ष्यमाणास्ते प्रत्यावृत्य

गृहपतेः—वक्ष्यमाणकथानकाभिधास्यमाननामधेयस्य श्रेष्ठिनः राजग्रहाद् यः पुत्राणां मोक्षो—विमोचनं तदेव ज्ञातं—दृष्टान्तः तस्मात्, भावार्थश्च कथानकगम्यः, तच्चेदं—समस्ति सकलसुरसुन्दरीमनोहरविलासोपहासप्रदानप्रवणसीमन्तिनीजनकटाक्षच्छटाक्षेपोपलक्ष्यमाणनिखिलरामणीयकप्रदेशो देशो मगधाभिधानः, तत्र च तुषारगिरिशिखरधवलप्रासादमालाविमलकूटकोटिभिरकालेऽपि शरदभ्रलीलां कुर्वाणमिव बभूव वसन्तपुरं नाम नगरं, तस्य च पालयिता सेवावसररभसप्रणवनिखिलभूपालविमलमौलिमुकुटकोटीविलग्नमाणिक्यमयूखव्राताभिरञ्जितक्रमकमलयुगः चण्डदोर्दण्डव्यापारितमण्डलाग्रखण्डितारातिमत्तमातङ्गकुम्भस्थलगलितमुक्ताफलप्रकरप्रसाधिताशेषसंग्राममहीमण्डलः समजायत जितशत्रुनामा नृपतिः, तस्य च सकलजननयनमनोहारिणी पूर्वभवपरम्परोपार्जितपुण्यप्राग्भारनिर्मापितफलसंबन्धानुकारिणी त्रिभुवनवधूविलासावलेपापहारिणी बभूव प्रेयसी धारिणी, तया च सार्द्धमसौ महीपतिः प्रणताशेषक्षितिपतिः दूरतो निराकृतनिकृतिर्मनोहरपञ्चप्रकारभोगान् भुञ्जानो महान्तमनेहासमनैषीत्। इतश्च तत्रैव पुरे प्रचुरतरद्विपदचतुष्पदापदहिरण्यसुवर्णधनधान्यशङ्खशिलामुक्ताप्रवालपद्मरागवैडूर्यचन्द्रकान्तेन्द्रनीलमहानीलराजपट्टप्रभृतिप्रवरपदार्थसार्थपरिपूर्णसमृद्धिसमुपहसितश्रीकण्ठसखदर्पोद्रेको दीनानाथान्धपङ्गुप्रमुखप्राणिप्रणाशिताशेषशोकः समजनि समुद्रदत्ताभिधानो निखिलवणिग्वर्गप्रधानो गुणगणगरिष्ठः श्रेष्ठी, तस्य चाश्रय इव लावण्यगुणानां उदाहरणमिव सर्वश्रेयोवस्तूनां महानिधानमिव पुण्यरत्नानां भूषणमिव स्वकुलसंततेः पादप इव सौकुमार्यवनलतायाः समभवत् सुमङ्गलाभिधाना सधर्मचारिणी, तस्यामसौ निविडबद्धानुरागो जीवलोकोद्भवप्राज्यवैषयिकशर्मसागरोदरमध्यमग्नोऽनल्पं कालमतिवाहयांचकार, प्रस्तावे च समजनिषत तयोर्विशदसमाचारसमाचरणपवित्राः पुत्राः क्रमेण प्रियङ्कर—क्षेमङ्कर—ध-

तथा–व्रतशीलेषु पञ्च पञ्च यथाक्रममिति ॥ २२ ॥ (१५५)

व्रतेषु–अणुव्रतेषु शीलेषु च–गुणव्रतशिक्षापदलक्षणेषु पञ्च पञ्च 'यथाक्रमं' यथापरिपाटि, अतिचारा भवन्तीति सर्वत्रानुवर्त्तते इति ॥ २२ ॥ तत्र प्रथमाणुव्रते—

बन्ध १ वध २ च्छविच्छेदा ३ तिभारारोपणा ४ न्नपाननिरोधा ५ इति ॥ २३ ॥ (१५६)

स्थूलप्राणातिपातविरतिलक्षणस्याणुव्रतस्य बन्धो वधः छविच्छेदोऽतिभारारोपणमन्नपाननिरोधश्चेत्यतिचाराः, तत्र बन्धो–रज्जुदामनकादिना संयमनं, वधः-कशादिभिर्हननं, छविः–त्वक् तद्योगाच्छरीरमपि छविः, तस्य छेदः–असिपुत्रिकादिभिः पाटनं, तथाऽतीव भारोऽतिभारः–प्रभूतस्य पूगफलादेर्गवादिपृष्ठादावारोपणं, तथा अन्नपानयोः–भोजनोदकयोर्निरोधः–व्यवच्छेदः-अन्नपाननिरोधः, एते च क्रोधलोभादिकषायमलकलङ्कितान्तःकरणस्य प्राणिप्राणप्रहाणनिरपेक्षस्य सतो जन्तोरतिचारा भवन्ति, सापेक्षस्य तु बन्धादिकरणेऽपि सापेक्षत्वान्नातिचारत्वमेषामिति । अत्र चायमावश्यकचूर्ण्याद्युक्तो विधिः–बन्धो द्विपदानां चतुष्पदानां वा स्यात्, सोऽप्यर्थायानर्थाय वा, तत्रानर्थाय तावन्नासौ विधातुं युज्यते, अर्थाय पुनरसौ द्विविधः स्यात्–सापेक्षो निरपेक्षश्च, तत्र निरपेक्षो नाम यन्निश्चलमत्यर्थं बध्यते, सापेक्षः पुनर्यद्दामग्रन्थिना यश्च बद्धः सन् शक्यते प्रदीपनकादिषु विमोचयितुं वा छेत्तुं वा, एवं तावच्चतुष्पदानां बन्धः । द्विपदानां पुनरेवं-दासो वा दासी वा चौरो वा पाठादिप्रमत्तः पुत्रो वा यदि बध्यते तदा सविक्रमेणैव बन्धनीयो रक्षणीयश्च तथा यथाऽग्निभयादिषु न विनश्यति, तथा ते किल द्विपदचतुष्पदाः श्रावकेण संग्रहीतव्याः ये अबद्धा एवासत इति १, वधोऽपि तथैव, नवरं निरपेक्षवधो निर्दयताडना,

इहैतेपामणुव्रतादीनां प्रागुक्तलक्षणे यथार्ह-धर्मार्हे प्राणिनि यदारोपणं—उक्तविधिनैव निक्षेपणं, तत्किमित्याह—दानं प्रागुपन्यस्तमभिधीयते, कथमित्याह—' साकल्यवैकल्याभ्यां ' साकल्येन—समस्ताणुव्रतगुणव्रतशिक्षापदाध्यारोपलक्षणेन, वैकल्येन वा—अणुव्रतादीनामन्यतमारोपणेनेति ॥ १९ ॥ एवं सम्यक्त्वमूलकेष्वणुव्रतादिपु समारोपितेषु यत्करणीयं तदाह—

गृहीतेष्वनतिचारपालनमिति ॥ २० ॥ (१५३)

' गृहीतेपु '-प्रतिपन्नेषु सम्यग्दर्शनादिषु गुणेषु, किमित्याह—' अनतिचारपालन 'मिति अतिचारो—विराधना देशभङ्ग इत्येकोऽर्थः, अविद्यमानोऽतिचारो येषु तानि अनतिचाराणि तेपां अनुपालनं—धरणं कार्यं, अतिचारदोषोपघातेन हि कुवातोपहतसस्यानामिव स्वफलप्रसाधनं प्रत्यसमर्थत्वादमीपामिति अनतिचारपालनमित्युक्तम् ॥ २० ॥ अथातिचारानेवाह—

शङ्का १ काङ्क्षा २ विचिकित्सा ३ ऽन्यदृष्टिप्रशंसासंस्तवाः ४-५ सम्यग्दृष्टेरतिचारा इति ॥२१॥ (१५४)

इह शङ्का काङ्क्षा विचिकित्सा च 'ज्ञानाद्याचारकथन' मिति सूत्रव्याख्यानोक्तलक्षणा एव, अन्यदृष्टीनां—सर्वज्ञप्रणीतदर्शनव्यतिरिक्तानां शाक्यकपिलकणादाक्षपादादिप्रणीतमतवर्त्तिनां पाषण्डिनां प्रशंसासंस्तवौ अन्यदृष्टिप्रशंसासंस्तवौ, तत्र ' पुण्यभाज एते ' सुलब्धमेषां जन्म' 'दयालव एते' इत्यादिका प्रशंसा, संस्तवश्चेह संवासजनितः परिचयः वसनभोजनदानालापादिलक्षणः परिगृह्यते न स्तवरूपः, तथा च लोके प्रतीत एव संपूर्वः स्तौतिः-परिचये, ' असंस्तुतेषु प्रसभं भयेष्वि'त्यादाविवेति, ततः शङ्का च काङ्क्षा च विचिकित्सा च अन्यदृष्टिप्रशंसासंस्तवौ चेति समासः, किमित्याह-' सम्यग्दृष्टेः' सम्यग्दर्शनस्य ' अतिचारा ' विराधनाप्रकाराः संपद्यन्ते, शुद्धतत्त्वश्रद्धानबाधाविधायित्वादिति ॥ २१ ॥

तथा–सामायिकदेशावकाशिकपोषधोपवासातिथिसंविभागाश्चत्वारि शिक्षापदानीति ॥१८॥ (१५१)

समानां–मोक्षसाधनं प्रति सदृशसामर्थ्यानां सम्यग्दर्शनज्ञानचारित्राणामायो–लाभः समायः,समस्य वा-रागद्वेषांतरालवर्त्तितया मध्यस्थस्य सतः आयः-सम्यग्दर्शनादिलक्षणः समायः,साम्नो वा–सर्वजीवमैत्रीभावलक्षणस्य आयः-समायः, सर्वत्र स्वार्थिकेकप्रत्ययोपादानात् सामायिकं–सावद्ययोगपरिहारनिरवद्ययोगानुष्ठानरूपो जीवपरिणामः, देशे–विभागे प्राक्प्रतिपन्नदिग्व्रतस्य योजनशतादिपरिमाणरूपस्य अवकाशो–गोचरो यस्य प्रतिदिनं प्रत्याख्येयतया तत्तथा, पोषं धत्ते पोषधः–अष्टमीचतुर्दश्यादिः पर्वदिवसः उपेति–सह उपावृत्तदोषस्य सतो गुणैराहारपरिहारादिरूपैर्वासः उपवासः, यथोक्तम्–"उपावृत्तस्य दोषेभ्यः, सम्यग्वासो गुणैः सह । उपवासः स विज्ञेयो, न शरीरविशोषणम्" ॥१०३॥ ततः पोषधेषूपवासः पोषधोपवासः, अतिथयो–वीतरागधर्मस्थाः साधवः साध्व्यः श्रावकाः श्राविकाश्च तेषां न्यायागतकल्पनीयादिविशेषणानामन्नपानादीनां संगतवृत्त्या विभजनं–वितरणं अतिथिसंविभागः, तथा च उमास्वातिवाचकविरचितश्रावकप्रज्ञप्तिसूत्रं–यथा–"अतिथिसंविभागो नाम अतिथयः साधवः साध्व्यः श्रावकाः श्राविकाश्च, एतेषु गृहमुपागतेषु भक्त्याऽभ्युत्थानासनदानपादप्रमार्जननमस्कारादिभिरर्चयित्वा यथाविभवशक्ति अन्नपानवस्त्रौषधालयादिप्रदानेन संविभागः कार्य" इति, ततः सामायिकं च देशावकाशिकं च पोषधोपवासश्चातिथिसंविभागश्चेति समासः, 'चत्वारि' चतुःसंख्यानि, किमित्याह–'शिक्षापदानि' शिक्षा–साधुधर्माभ्यासः तस्य पदानि–स्थानानि भवन्ति ॥ ९ ॥

ततश्च–एतदारोपणं दानं यथाऽर्हं, साकल्यवैकल्याभ्यामिति ॥ १९ ॥ (१५२)

एकानेकव्रतारोपणम्.

स्थूलप्राणातिपातादिभ्यो विरतिरणुव्रतानि पञ्चेति ॥१६॥ (१४९)

इह प्राणातिपातः—प्रमत्तयोगात् प्राणिव्यपरोपणरूपः, स च स्थूलः सूक्ष्मश्च, तत्र सूक्ष्मः पृथिव्यादिविषयः, स्थूलश्च द्वीन्द्रियादित्रसगोचरः, स्थूलश्चासौ प्राणातिपातश्चेति स्थूलप्राणातिपातः,आदिशब्दात् स्थूलमृषावादादत्तादानाब्रह्मपरिग्रहाः परिगृह्यन्ते, ते च प्रायः प्रतीतरूपा एव, ततस्तेभ्यः स्थूलप्राणातिपातादिभ्यः पञ्चभ्यो महापातकेभ्यो विरतिः-विरमणं, किमित्याह-साधुव्रतेभ्यः सकाशात् अणूनि—लघूनि व्रतानि—नियमरूपाणि अणुव्रतानि, कियन्तीत्याह—'पञ्चे'ति पञ्चसंख्यानि पञ्चाणुव्रतानि, बहुवचननिर्देशेऽपि यद्विरतिरित्येकवचननिर्देशः स सर्वत्र विरतिसामान्यापेक्षयेति ॥ ७ ॥

तथा—दिग्व्रतभोगोपभोगमानानर्थदण्डविरतयस्त्रीणि गुणव्रतानीति ॥१७॥ (१५०)

दिशो ह्यनेकप्रकाराः शास्त्रे वर्णिताः, तत्र सूर्योपलक्षिता पूर्वा, शेषाश्च पूर्वदक्षिणादिकाः सप्त तथा ऊर्ध्वमधश्च द्वे, एवं दशसु दिक्षु विषये गमनपरिमाणकरणलक्षणं व्रतं—नियमो दिग्व्रतं, भुज्यते—सकृदेवासेव्यते यदशनादि तद्भोगः, पुनः पुनर्भुज्यते वसनवनितादि यत्तदुपभोगः, भोगश्चोपभोगश्च भोगोपभोगौ तयोर्मानं—परिमाणं भोगोपभोगमानं, अर्थः—प्रयोजनं धर्मस्वजनेन्द्रियगतशुद्धोपकारस्वरूपं तस्मै अर्थाय दण्डः—सावद्यानुष्ठानरूपस्तत्प्रतिषेधादनर्थदण्डः, स च चतुर्द्धा—अपध्यानाचरितप्रमादाचरितहिंस्रप्रदानपापकर्मोपदेशभेदात्, तस्य विरतिरनर्थदण्डविरतिः, ततः दिग्व्रतं च भोगोपभोगमानं चानर्थदण्डविरतिश्चेति समासः, किमित्याह—'त्रीणि' त्रिसंख्यानि 'गुणव्रतानि' गुणाय—उपकाराय व्रतानि भवन्ति, गुणव्रतप्रतिपत्तिमन्तरेणाणुव्रतानां तथाविधशुद्ध्यभावादिति ॥ १७ ॥

विरुद्धराज्यातिक्रमः ३, हीने—स्वभावापेक्षाया न्यूने अधिके वा मानोन्माने—कुडवादितुलारूपे भवतो हीनाधिकमानोन्माने ४; प्रतिरूपक-शुद्धेन व्रीह्यादिना घृतादिना वा प्रतिरूपकं—सदृशं पलञ्ज्यादि वसादि वा द्रव्यं तेन व्यवहारो—विक्रयरूपः स प्रतिरूपकव्यवहार इति ५। इह स्तेनप्रयोगो यद्यपि चौर्यं न करोमि न कारयामीत्येवंप्रतिपन्नव्रतस्य भङ्ग एव तथापि किमधुना यूयं निर्व्यापारास्तिष्ठथ? यदि वो भक्तकादि नास्ति तदाऽहं ददामि भवदानीतमोषस्य च यदि विक्रायको न विद्यते तदाऽहं विक्रेष्यामि इत्येवंविधवचनैश्चौरान् व्यापारयतः स्वकल्पनया तद्व्यापारणं परिहरतो व्रतसापेक्षस्यासावतिचारः १ तथा स्तेनाहृतं काणक्रयेण लोभदोषात् प्रच्छन्नं गृह्णंश्चौरो भवति, यदाह—"चौरश्चौरापको मन्त्री, भेदज्ञः काणकक्रयी। अन्नदः स्थानदश्चैव, चौरः सप्तविधः स्मृतः ॥ १०७ ॥" ततश्चौर्यकरणाद् व्रतभङ्गः वाणिज्यमेव मया विधीयते न चौरिकेत्यध्यवसायेन च व्रतानपेक्षत्वाभावाद् न भङ्ग इति भङ्गाभङ्गरूपोऽतिचारः २। विरुद्धराज्यातिक्रमस्तु यद्यपि स्वस्वामिनोऽननुज्ञातस्य परकटकादि-प्रवेशस्य "सामी जीवादत्तं तित्थयरेणं तहेव य गुरूहिं" इत्यदत्तादानलक्षणयोगेन विरुद्धराज्यातिक्रमकारिणां च चौर्यदण्डयोगेनादत्तादानरूपत्वाद् भङ्ग एव तथापि विरुद्धराज्यातिक्रमं कुर्वता मया वाणिज्यमेव कृतं न चौर्यमिति भावनया व्रतसापेक्षत्वात् लोके च चौरोऽयमिति व्यपदेशाभावादतिचारोऽयमिति ३। तथा हीनाधिकमानोन्मानव्यवहारः प्रतिरूपकव्यवहारश्च परव्यंसनेन परधनग्रहणरूपत्वाद् भङ्ग एव, केवलं क्षात्रखननादिकमेव चौर्यं कूटतुलादिव्यवहारतत्प्रतिरूपकव्यवहारौ तु वणिक्कलैवेति स्वकीयकल्पनया व्रतरक्षणोद्यततयाऽतिचार इति ४-५। अथवा स्तेनप्रयोगादयः पञ्चाप्यमी व्यक्तचौर्यरूपा एव, केवलं सहसाकारादिना अतिक्रमव्यतिक्रमादिना वा प्रकारेण विधीयमाना अतिचारतया व्यपदिश्यन्ते इति। न चैते राज-

तिचारोऽयं व्रतसव्यपेक्षत्वान्मृषावादे परप्रवर्त्तनाच्च, भग्नाभग्नरूपत्वाद् व्रतस्येति। ननु रहस्याभ्याख्यानमसद्दोषाभिधानरूपत्वेन प्रत्याख्यातत्वाद्भङ्ग एव, न त्वतिचार इति, सत्यं, किंतु यदा परोपघातकमनाभोगादिनाऽभिधत्ते तदा संक्लेशाभावेन व्रतानपेक्षत्वाभावान्न व्रतस्य भङ्गः परोपघातहेतुत्वाच्च भङ्ग इति भङ्गाभङ्गरूपोऽतिचारः, यदा पुनस्तीव्रसंक्लेशादभ्याख्याति तदा भङ्गो व्रतनिरपेक्षत्वात्, आह च—" सहसऽब्भक्खाणाई जाणंतो जइ करेइ तो भंगो। जइ पुणणाभोगाईहिंतो तो होइ अइयारो ॥ ॥१०६॥" कूटलेखकरणं तु यद्यपि कायेन मृषावादं न करोमीत्यस्य न करोमि न कारयामीत्यस्य वा व्रतस्य भङ्ग एव, व्रतान्तरे तु न किञ्चन, तथापि सहसात्कारादिनाऽतिक्रमादिना वाऽतिचारः, अथवा मृषावाद इति मृषाभणनं मया प्रत्याख्यातमिदं तु पुनर्लेखनमिति भावनया मुग्धबुद्धेर्व्रतसव्यपेक्षस्यातिचार इति। न्यासापहारे पुनरदत्तादानं साक्षादेव भवति, मृषावादव्रतातिचारत्वं चास्य न त्वदीयं मम समीपे किञ्चिदपीत्यनाभोगादिनाऽपह्नुवानस्य स्यादिति। स्वदारमन्त्रभेदः पुनरनुवादरूपत्वेन सत्यत्वात् यद्यपि नातिचारो घटते तथापि मन्त्रितार्थप्रकाशनजनितलज्जादितः स्वदारादेर्मरणादिसंभवेन परमार्थतस्तस्यासत्यत्वात् कथञ्चिद् भङ्गरूपत्वादतिचार एवेति ॥ २४ ॥ अथ तृतीयस्य—

स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहारा इति ॥ २५ ॥ (१५८)

स्तेनप्रयोगश्च तदाहृतादानं च विरुद्धराज्यातिक्रमश्च हीनाधिकमानोन्मानानि च प्रतिरूपकव्यवहारश्चेति समासः, तत्र स्तेनाः—चौरास्तेषां प्रयोगो—व्यापारणं 'हरत यूयं' इत्यनुज्ञाप्रदानं १, तथा तैराहृतस्य कुङ्कुमादिद्रव्यस्यादानं—संग्रहः २, विरुद्धः—स्वकीयस्य राज्ञः प्रतिपन्थी तस्य राज्यं—कटकं देशो वा तत्रातिक्रमः—स्वराजभूमिसीमातिलङ्घनेन क्रमणं—प्रवेशः

पालनमिति देशस्य भञ्जनादेशस्यैव च पालनादतिचारव्यपदेशः प्रवर्तते, तदुक्तम्—"न मारयामीति कृतव्रतस्य, विनैव मृत्युं क इहातिचारः?। निगद्यते यः कुपितो वधादीन्, करोत्यसौ स्यान्नियमानपेक्षः ॥१०४॥ मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः। देशस्य भङ्गादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति ॥ १०५ ॥" यच्चोक्तं 'व्रतेयत्ता विशीर्येत' इति, तदयुक्तं, विशुद्धहिंसादिविरतिसद्भावे हि वंधादीनामभाव एवेति, तदेवं वन्धादयोऽतिचारा एवेनि, वन्धादिग्रहणस्य चोपलक्षणत्वान्मन्त्रतन्त्रप्रयोगादयोऽन्येऽप्येवमत्रातिचारतया दृश्या इति ॥ २३ ॥ अथ द्वितीयस्य—

"मिथ्योपदेशरहस्याभ्याख्यानकूटलेखक्रियान्यासापहारस्वदारमन्त्रभेदा इति ॥ २४ ॥ (१५७)

मिथ्योपदेशश्च रहस्याभ्याख्यानं च कूटलेखक्रिया च न्यासापहारश्च स्वदारमन्त्रभेदश्चेति समासः, तत्र मिथ्योपदेशो नाम अलीकवादविषय उपदेशः—इदमेवं चैवं च ब्रूहीत्यादिकमसत्याभिधानशिक्षणं १ 'रहस्याभ्याख्यानं' रहः—एकान्तस्तत्र भवं रहस्यं—रहोनिमित्त तच्च तदभ्याख्यानं चेति समासः, एतदुक्तं भवति—रहसि मन्त्रयमाणानवलोक्याभिधत्ते 'एते हि इदं चेदं च राजादिविरुद्धं मन्त्रयन्ते' इति २ कूटलेखस्य—असद्भूतार्थसूचकाक्षरलेखनस्य करणं कूटलेखक्रिया ३ 'न्यासापहार' इति न्यासः—परगृहे रूपकादेर्निक्षेपः तस्य अपहारः—अपलापः ४ 'स्वदारमन्त्रभेद' इति स्वदाराणां उपलक्षणार्थत्वान्मित्रादीनां च मन्त्रस्य—गुप्तभाषितस्य भेदो—बहिः प्रकाशनं इति ५। अत्र च मिथ्योपदेशो यद्यपि मृषा न वादयामीत्यत्र न वदामि न वादयामीत्यत्र वा व्रते भंग एव, न वदामीति व्रतान्तरे तु न किञ्चन तथापि सहसात्कारानाभोगाभ्यामतिक्रमव्यतिक्रमातिचारैर्वा मृषावादे परप्रवर्त्तनं व्रतस्यातिचारोऽयं, अथवा व्रतसंरक्षणबुद्ध्या परवृत्तान्तकथनद्वारेण मृषोपदेशं यच्छतोऽ-

सापेक्षवधः पुनरेवम्-आदित एव भीतपर्षदा श्रावकेण भवितव्यं, यदि पुनर्न करोति कोऽपि विनयं तदा तं मर्माणि मुक्त्वा लतया दवरकेण वा सकृद् द्विर्वा ताडयेदिति २, छविच्छेदोऽपि तथैव, नवरं निरपेक्षो हस्तपादकर्णनासिकादि यन्निर्दयं छिनत्ति, सापेक्षः पुनर्यद् गण्डं वाऽरुर्वा छिन्द्याद्वा दहेद्वेति ३, तथाऽतिभारो नारोपयितव्यः, पूर्वमेव हि या द्विपदादिवाहनेन जीविका सा श्राद्धेन मोक्तव्या, अथान्याऽसौ न भवेत्तदा द्विपदो यं भारं स्वयमुत्क्षिपत्यवतारयति च तं वाह्यते, चतुष्पदस्य तु यथोचितभारादसौ किञ्चिदूनः क्रियते, हलशकटादिषु पुनरुचितवेलायामसौ मुच्यत इति ४, तथा भक्तपानव्यवच्छेदो न कस्यापि कर्त्तव्यः, तीक्ष्णबुभुक्षो ह्यन्यथा म्रियते, सोऽप्यर्थानर्थादिभेदो बन्धवत् द्रष्टव्यः, नवरं सापेक्षो रोगचिकित्सार्थं स्यात्, अपराधकारिणि च वाचैव वदेत् यद् अद्य ते न दास्यते भोजनादि, शान्तिनिमित्तं चोपवासं कारयेत् ५। किं बहुना ?, यथा मूलगुणस्य प्राणातिपातविरमणस्यातिचारो न भवति तथा सर्वत्र यतनया यतितव्यमिति ॥ ननु प्राणातिपात एव व्रतिना प्रत्याख्यातः, ततो बन्धादिकरणेऽपि न दोषो, विरतेरखण्डितत्वात्, अथ बन्धादयोऽपि प्रत्याख्यातास्तदा तत्करणे व्रतभङ्ग एव, विरतिखण्डनात्, किंच-बन्धादीनां प्रत्याख्येयत्वे विवक्षितव्रतेयत्ता विशीर्येत, प्रतिव्रतं पञ्चानामतिचारव्रतानामाधिक्यादित्येवं न बन्धादीनामतिचारतेति, अत्रोच्यते, सत्यं प्राणातिपात एव प्रत्याख्यातो न बन्धादयः, केवलं तत्प्रत्याख्यानेऽर्थतस्तेऽपि प्रत्याख्याता एव द्रष्टव्याः तदुपायत्वात्तेषां, नच बन्धादिकरणेऽपि व्रतभङ्गः, किं त्वतिचार एव, कथम् ?, इह द्विविधं व्रतं-अन्तर्वृत्त्या बहिर्वृत्त्या च, तत्र मारयामीतिविकल्पाभावेन यदा कोपाद्यावेशात्परप्राणप्रहाणमवगणयन् बन्धादौ प्रवर्त्तते न च प्राणघातो भवति तदा दयावर्जिततया विरत्यनपेक्षप्रवृत्तत्वेनान्तर्वृत्त्या व्रतस्य भङ्गः, प्राणिघाताभावाच्च बहिर्वृत्त्या

तृतीयस्त्वतिक्रमादिना परपुरुषमभिसरन्त्याः समवसेयः, ब्रह्मचारिणस्त्वतिक्रमादिनाऽतिचार इति ॥२६॥ अथ पञ्चमाणुव्रतस्य—

क्षेत्रवास्तु १ हिरण्यसुवर्णं २ धनधान्य३ दासीदास ४ कुप्यप्रमाणातिक्रमा ५ इति ॥२७॥ (१६०)

क्षेत्रवास्तुनोः १ हिरण्यसुवर्णयोः २ धनधान्ययोः ३ दासीदासयोः ४ कुप्यस्य ५ च प्रमाणातिक्रमा इति समासः, तत्र क्षेत्रं—सस्योत्पत्तिभूमिः, तच्च सेतुकेतूभयभेदात् त्रिविधं, तत्र सेतुक्षेत्रं—अरघट्टादिसेक्यं, केतुक्षेत्रं तु आकाशोदकनिष्पाद्यं, उभयक्षेत्रं तु तदुभयनिष्पाद्यं; वास्तु पुनरगारं ग्रामनगरादि च, तत्रागारं त्रिविधं-खातमुच्छ्रितं खातोच्छ्रितं च, तत्र खातं—भूमिगृहादि उच्छ्रितं-उच्छ्रयेण कृतं उभयं—भूमिगृहस्योपरि प्रासादः, एतयोश्च क्षेत्रवास्तुनोः प्रमाणस्य क्षेत्रान्तरादिमीलनेन अतिक्रमोऽतिचारो भवति, तथाहि-किलैकमेव क्षेत्रं वास्तु वेत्यभिग्रहवतोऽधिकतरतदभिलाषे सति व्रतभङ्गभयात्प्राक्तनक्षेत्रादिप्रत्यासन्नं तद् गृहीत्वा पूर्वेण सह तस्यैकत्वकरणार्थं वृत्त्याद्यपनयनेन तत्तत्र योजयतो व्रतसापेक्षत्वात्कथञ्चिद्विरतिबाधनाच्चातिचार इति १ तथा हिरण्यं—रजतं सुवर्णं—हेम एतत्परिमाणस्य अन्यवितरणेनातिक्रमोऽतिचारो भवति, यथा केनापि चतुर्मासाद्यवधिना हिरण्यादिपरिमाणं विहितं, तत्र च तेन तुष्टराजादेः सकाशात्तदधिकं तल्लब्धं, तच्चान्यस्मै व्रतभङ्गभयात् प्रददाति पूर्णेऽवधौ गृहीष्यामीति भावनयेति व्रतसापेक्षत्वात्कथञ्चिद्विरतिबाधनाच्चातिचार इति २ तथा धनं—गणिमधरिममेयपरिच्छेद्यभेदाच्चतुर्विधं, तत्र गणिमं पूगफलादि, धरिमं गुडादि, मेयं घृतादि, परिच्छेद्यं माणिक्यादि; धान्यं-व्रीह्यादि, एतत्प्रमाणस्य बन्धनतोऽतिक्रमोऽतिचारो भवति, यथा हि किल कृतधनादिपरिमाणस्य कोऽपि लभ्यमन्यद्वा धनादि ददाति, तच्च व्रतभङ्गभयाच्चातुर्मास्यादिपरतो गृहगतधनादिविक्रये वा कृते गृहीष्यामीति भावनया बन्धनेन-नियन्त्रणेन रज्ज्वादिसंयमनेन सत्यङ्कारदानादिरूपेण वा स्वीकृत्य तद्गेह

धाडु

देवार्थी

ब्धानु

भावयन्ति-स हि निधुवनमेव व्रतविषय इति स्वकीयकल्पनया तत्परिहरन् स्वदारसंतोषी वेश्यादौ परदारवर्जकस्तु परदारेष्वालिङ्गनादिरूपामनङ्गक्रीडां कुर्वन् कथञ्चिदेवातिचरति व्रतं व्रतसापेक्षत्वादिति, तथा स्वदारसंतोषवता स्वकलत्राद् इतरेण च स्वकलत्रवेश्याभ्यामन्यत्र मनोवाक्कायैर्मैथुनं न कार्यं न च कारणीयमित्येवं यदा प्रतिपन्नं व्रतं भवति तदा परविवाहकरणतः तत्कारणमर्थतोऽनुष्ठितं भवति, तद्व्रती च मन्यते विवाह एवायं मया विधीयते न मैथुनमिति ततो व्रतसापेक्षत्वादतिचार इति। ननु परविवाहकरणे कन्याफललिप्सा कारणमुक्तं तत्र किं सम्यग्दृष्टिरसौ व्रती मिथ्यादृष्टिर्वा ?, यदि सम्यग्दृष्टिस्तदा तस्य न सा संभवति, सम्यग्दृष्टित्वादेव, अथ मिथ्यादृष्टिस्तदा मिथ्यादृष्टेरव्रतानि भवन्त्येवेति कथं सा परविवाहकरणलक्षणातिचारकारणमिति, सत्यं, केवलमव्युत्पन्नावस्थायां साऽपि संभवति, किंच यथाभद्रकस्य मिथ्यादृशोऽपि सन्मार्गप्रवेशनायाभिग्रहमात्रं ददत्यपि गीतार्थाः, यथा आर्यसुहस्ती रङ्कस्य सर्वविरतिं दत्तवान्, इदं च परविवाहवर्जनं स्वापत्यव्यतिरिक्तेष्वेव न्याय्यमन्यथाऽपरिणीता कन्या स्वच्छन्दचारिणी स्यात्, ततः शासनोपघातः स्याद् विहितविवाहा तु कृतव्रतबन्धत्वेन न तथा स्यादिति, यच्चोक्तं 'स्वापत्येष्वपि संख्याभिग्रहो न्याय्यः' तच्चिन्तकान्तरसद्भावे श्रुतसंख्यापूर्त्तौ वाऽपत्यान्तरोत्पत्तिपरिहारोपायत इति। अपरे पुनराहुः—परः—अन्यो यो विवाहः—आत्मन एव विशिष्टसंतोषाभावात् योषिदन्तराणि प्रति विवाहान्तरकरणं तत् परविवाहकरणम्, अयं च स्वदारसंतोषिण इति, स्त्रियास्तु स्वपुरुषसंतोषपरपुरुषवर्जनयोर्न भेदः, स्वपुरुषव्यतिरेकेणान्येषां सर्वेषां परपुरुषत्वात्, ततः परविवाहकरणानङ्गक्रीडातीव्रकामाभिलाषाः स्वदारसंतोषिण इव स्वपुरुषविषये स्युः, द्वितीयस्तु यदा स्वकीयपतिः सपत्न्या वारकदिने परिगृहीतो भवति तदा सपत्नीवारकमतिक्रम्य तं परिभुञ्जानाया अतिचारः,

एतदेव च सूत्रानुपाति, यदाह—" सदारसंतोसस्स इमे पंच अइयारा " इत्यादि, भावना चेयमत्र—भाटीप्रदानेनेत्वरकालस्वीकारेण स्वकलत्रीकृत्य वेश्यां भुञ्जानस्य स्वकीयकल्पनया स्वदारत्वेन व्रतसापेक्षचित्तत्वान्न व्रतभङ्गः अल्पकालपरिग्रहाच्च वस्तुतोऽस्वकलत्रत्वाद्भङ्ग इति भङ्गाभङ्गरूपोऽतिचारः, अपरिगृहीतागमनं त्वनाभोगादिनाऽतिक्रमादिना वाऽतिचारः, परदारवर्जिनो नैतावतिचारौ, इत्वरकालपरिगृहीतापरिगृहीतयोर्वेश्यात्वेनानाथकुलाङ्गनायास्त्वनाथतयैवापरदारत्वादिति ॥ अपरे त्वाहुः—इत्वरपरिगृहीतागमनं स्वदारसंतोषवतोऽतिचारः अपरिगृहीतागमनं तु परदारवर्जिनः, तत्र प्रथमभावना पूर्ववत्, द्वितीयभावना त्वेवं—अपरीगृहीता नाम वेश्या तां यदा गृहीतान्यसत्कभाटिकामभिगच्छति तदा परदारगमनजन्यदोषसंभवात्कथञ्चित् परदारत्वाच्च भङ्गो वेश्यात्वाच्चाभङ्गो भङ्गाभङ्ग इत्यतिचारः ॥ अन्ये पुनरन्यथा प्राहुः—" परदारवज्जिणो पंच होन्ति तिन्नि उ सदारसंतुट्ठे । इत्थीए तिन्नि पंच व भंगविगप्पेहिं नायव्वा ॥ १०८ ॥ " इह भावना—परेण इत्वरकालं या परिगृहीता वेश्या तद्गमनमतिचारः परदारवर्जिनः, कथञ्चित्तस्याः परदारत्वात्, तथा अपरिगृहीतायाः अनाथकुलाङ्गनाया एव यद् गमनं तदपि तस्यैवातिचारो, लोके परदारत्वेन तस्या रूढत्वात्, तत्कामुककल्पनया च परस्य भर्त्रादेरभावेनापरदारत्वात् । शेषास्तूभयोरपि स्युः, तथाहि-स्वदारसंतोषिणः स्वकलत्रेऽपि तदितरस्य तु वेश्यास्वकलत्रयोरपि यदनङ्गरतं तत्साक्षादप्रत्याख्यातमपि न विधेयं, यतोऽसावत्यन्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयासहिष्णुतया तद्विधातुं न शक्नोति तदा यापनामात्रार्थं स्वदारसंतोषादि प्रतिपद्यते, मैथुनमात्रेणैव च यापनायाः संभवादनङ्गरतमर्थतः प्रत्याख्यातमेव, एवं परविवाहतीव्रकामाभिलाषावपीति, अतः कथञ्चित् प्रत्याख्यातेषु प्रवृत्तेरतिचारता तेषां । अन्ये त्वनङ्गक्रीडामेवं

सेवकादीनां न संभवन्ति, तथाहि—आद्ययोः स्पष्ट एव तेषां संभवः, विरुद्धराज्यातिक्रमस्तु यदा सामन्तादिः स्वस्वामिनो वृत्तिमुपजीवति तद्विरुद्धस्य च सहायीभवति तदा तस्यातिचारो भवति, कूटतुलादयस्तु यदा भाण्डागारद्रव्याणां विनिमयं कारयति तदा राज्ञोऽप्यतिचाराः स्युरिति ॥ २५ ॥ अथ चतुर्थाणुव्रतस्य स्वदारसंतोपलक्षणस्य परदारपरिहारस्य चातीचाराः—

**परविवाहकरणेत्वरपरिगृहीतापरिगृहीतागमनानङ्गक्रीडातीव्रकामाभिलाषा इति ॥ २६ ॥ (१५९)**

इत्वरपरिगृहीता चापरिगृहीता च इत्वरपरिगृहीतापरिगृहीते तयोर्गमने इत्वरपरिगृहीतापरिगृहीतागमने ततः परविवाहकरणं च इत्वरपरिगृहीतापरिगृहीतागमने चानङ्गक्रीडा च तीव्रकामाभिलापश्चेति समासः, इह परेषां—स्वापत्यव्यतिरिक्तानां जनानां विवाहकरणं-कन्याफललिप्सया स्नेहसंबन्धादिना वा परिणयनविधानं परविवाहकरणं, इह च स्वापत्येष्वपि संख्याभिग्रहो न्याय्यः, तथा इत्वरी—अयनशीला भाटीप्रदानेन स्तोककालं परिगृहीता इत्वरपरिगृहीता—वेश्या, तथा अपरिगृहीता—वेश्यैव अगृहीतान्यसत्कभाटिः कुलाङ्गना वाऽनाथेति तयोर्गमनं—आसेवनं इत्वरपरिगृहीतापरिगृहीतागमनं, तथा अङ्ग—देहावयवोऽपि मैथुनापेक्षया योनिर्मेहनं वा तद्व्यतिरिक्तानि अनङ्गानि—कुचकक्षोरुवदनादीनि तेषु क्रीडा—रमणं अनङ्गक्रीडा अथवा अनङ्गः—कामः तस्य तेन वा क्रीडा अनङ्गक्रीडा स्वलिङ्गेन निष्पन्नप्रयोजनस्याहार्यैश्चर्मादिघटितप्रजननैर्योषिद्वाच्यदेशासेवनमित्यर्थः, तथा कामे—कामोदयजन्ये मैथुने अथवा 'सूचनात्सूत्र'मिति न्यायात् कामेषु—कामभोगेषु, तत्र कामौ—शब्दरूपे भोगा—गन्धरसस्पर्शाः तेषु तीव्राभिलापः—अत्यन्ततदध्यवसायित्वं यतो वाजीकरणादिनाऽनवरतसुरतसुखार्थं मदनमुद्दीपयति, एतान् समाचरन्नतिचरति चतुर्थाणुव्रतमिति । इह च द्वितीयतृतीयातिचारौ स्वदारसंतोषिण एव नेतरस्य, शेषास्तु द्वयोरपीति,

स्युः ३ भाटीकर्म-यद् भाटकमादाय स्वकीयेन शकटादिना परभाण्डं वहत्यन्येषां वा शकटबलीवर्दादीनर्पयतीति ४ स्फोटीकर्म उण्डत्वं यद्वा हलेन भूमेः स्फोटनं ५ दन्तवाणिज्यं यत्पूर्वमेव पुलिन्द्राणां मूल्यं ददाति दन्तान्मे यूयं दद्यातेति ततस्ते हस्तिनो घ्नन्ति अचिरादसौ वाणिजक एष्यतीतिकृत्वा, एवं कर्मकराणां शङ्खमूल्यं ददाति, पूर्वानीतांस्तु क्रीणाति ६ लाक्षावाणिज्यमप्येवमेव, दोषस्तु तत्र कृमयो भवति ७ रसवाणिज्यं—कल्पपालत्वं, तत्र सुरादावनेके दोषाः मारणाक्रोशवधादयः ८ केशवाणिज्यं यद्दास्यादीन् गृहीत्वाऽन्यत्र विक्रीणीते, अत्राप्यनेके दोषाः परवशित्वादयः ९ विषवाणिज्यं—विषविक्रयः, स च न कल्पते, यतस्तेन बहूनां जीवानां विराधना स्यात् १० 'यन्त्रपीडनकर्मे'ति तिलेक्षुयन्त्रादिना तिलादिपीडनं ११ निर्लाञ्छनकर्म—गवादीनां वर्द्धितककरणं १२ 'दवदानकर्म' यद्वनदवं ददाति क्षेत्ररक्षणनिमित्तं यथोत्तरापथे, दग्धे हि तत्र तरुणं तृणमुत्तिष्ठते, तत्र च सत्त्वशतसहस्राणां वधः स्यात् १३ सरोहृदतडागपरिशोषणं यत् सरःप्रभृतीनि शोषयति १४ असतीपोषणं यद् योनिपोषका दासीः पोषयन्ति तत्संबन्धिनीं च भाटीं गृह्णन्ति यथा गोल्लविषय इति १५, दिङ्मात्रदर्शनं चैतत् बहुसावद्यानां कर्मणामेवंजातीयानां, न पुनः परिगणनमिति। इह चैवं विंशतिसंख्यातिचाराभिधानमन्यत्रापि पञ्चातिचारसंख्यया तज्जातीयानां व्रतपरिणामकालुष्यनिबन्धनविधीनामपरेषां संग्रहो द्रष्टव्य इति ज्ञापनार्थं, तेन स्मृत्यन्तर्धानादयो यथासंभवं सर्वव्रतेष्वतिचारा दृश्या इति। नन्वङ्गारकर्मादयः कस्मिन् व्रतेऽतिचाराः?, खरकर्मव्रत इति चेत्तर्हि व्रतविषयस्यातिचाराणां च कः परस्परं विशेषः?, खरकर्मरूपत्वादङ्गारकर्मादीनां, अत्रोच्यते, खरकर्मादय एवैतेऽतः खरकर्मादिव्रतिना परिहार्याः, यदा पुनरेतेष्वेवानाभोगादिना प्रवर्त्तते तदा खरकर्मव्रतातिचारा भवन्ति, यदा त्वाकुट्या तदा भङ्गा एवेति ॥ २९ ॥

सचित्तं च संबद्धं च संमिश्रं च अभिषवश्च दुष्पक्वाहारश्चेति समासः, इह च सचित्तादौ निवृत्तिविषयीकृतेऽपि प्रवृत्तावतिचाराभिधानं व्रतसापेक्षस्यानाभोगातिक्रमादि निबन्धनप्रवृत्त्या द्रष्टव्यम्, अन्यथा भङ्ग एव स्यात्, तत्र सचित्तं कन्दमूलफलादि, तथा संबद्धं–प्रतिबद्धं सचित्तवृक्षेषु गुन्दादि पक्वफलादि वा, तद्भक्षणं हि सावद्याहारवर्जकस्य सावद्याहारप्रवृत्तिरूपत्वादनाभोगादिनाऽतिचारः, अथवाऽस्थिकं त्यक्ष्यामि तस्यैव सचेतनत्वात् कटाहं तु भक्षयिष्यामि तस्याचेतनत्वादिति, तथा संमिश्रम्–अर्द्धपरिणतफलादि सद्यःपिष्टकणिकादि वा, अभिषवः-सुरासन्धानादि, दुष्पक्वाहारश्च–अर्द्धस्विन्नपृथुकादि, एतेऽपि अतिचारा अनाभोगादतिक्रमादिना वा सम्मिश्राद्युपजीवनप्रवृत्तस्य भवन्ति, अन्यथा पुनर्भङ्ग एवेति। इह भोगोपभोगमानलक्षणं गुणव्रतमन्यत्र भोजनतो गुणव्रतं यदुच्यते तदपेक्षयैवातिचारा उपन्यस्ताः, शेषव्रतपञ्चपञ्चातिचारसाधर्म्याद्, अन्यथाऽन्यत्रावश्यकनिर्युक्त्यादौ कर्मतोऽपीदमभिधीयते, तत्र कर्म–जीविकार्थमारम्भस्तदाश्रित्य खरकर्मादीनां निस्त्रिंशजनोचितकठोरारम्भाणां कोट्टपालगुप्तिपालत्वादीनां वर्जनपरिमाणं कार्यमिति। अत्र चाङ्गारकर्मादयः पञ्चदशातिचारा भवन्ति, तदुक्तम्–इंगाली १ वण २ साडी ३ भाडी ४ फोडीसु ५ वज्जए कम्मं। वाणिज्जं चेव य दंत ६ लक्ख ७ रस ८ केस ९ विसविसयं १० ॥ १०९ ॥ एवं खु जंतपीलणकम्मं ११ निल्लंछणं १२ च दवदाणं १३। सरदहतलायसोसं १४ असईपोसं च १५ वज्जिज्जा ॥ ११० ॥ भावार्थस्तु वृद्धसंप्रदायादवसेयः, स चायम् 'अङ्गारकर्मे'ति अङ्गारान् कृत्वा विक्रीणीते, तत्र षण्णां जीवनिकायानां वधः स्यात्ततस्तन्न कल्पते १, 'वनकर्म' यद्वनं क्रीणाति ततस्तच्छित्त्वा विक्रीय मूल्येन जीवति, एवं पत्रादीन्यपि प्रतिषिद्धानि भवन्ति २ शकटीकर्म–यच्छाकटिकत्वेन जीवति, तत्र गवादीनां वधबन्धादयो दोषाः

तिचाराः, एते च आनयने-विवक्षितक्षेत्रात्परतः स्थितस्य वस्तुनः परहस्तेन स्वक्षेत्रप्रापणे प्रेषणे वा ततः परेण उभये वा आनयनप्रेषणलक्षणे सति संपद्यन्ते, अयं चानयनादावनिक्रमो न कारयामीत्येवंविहितदिग्व्रतस्यैव संभवति, तदन्यस्य तु आनयनादावनतिक्रम एव, तथाविधमत्यारव्यानाभावादिति १-२-३। तथा क्षेत्रस्य पूर्वादिदेशस्य दिग्व्रतविषयस्य ह्रस्वस्य सतो वृद्धिः-वर्द्धनं पश्चिमादिक्षेत्रान्तरपरिमाणप्रक्षेपेण दीर्घीकरणं क्षेत्रवृद्धिः, किल केनापि पूर्वापरदिशोः प्रत्येकं योजनशतं गमनपरिमाणं कृतं, स चोत्पन्नप्रयोजन एकस्यां दिशि नवतिं व्यवस्थाप्यान्यस्यां तु दशोत्तरं योजनशतं करोति, उभाभ्यामपि प्रकाराभ्यां योजनशतद्वयरूपस्य परिमाणस्याव्याहतत्वादित्येवमेकत्र क्षेत्रं वर्द्धयतो व्रतसापेक्षत्वादतिचारः ४। तथा कथञ्चिदतिव्याकुलत्वप्रमादित्वमत्यपाटवादिना स्मृतेः-स्मरणस्य योजनशतादिरूपदिक्परिमाणविषयस्यान्तर्धानं-भ्रंशः स्मृत्यन्तर्धानमिति ५। इह वृद्धसंप्रदायः-ऊर्ध्वं यत्प्रमाणं गृहीतं तस्योपरि पर्वतशिखरे वृक्षे वा मर्कटः पक्षी वा वस्त्रमाभरणं वा गृहीत्वा व्रजेत्, तत्र तस्य न कल्पते गन्तुं, यदा तु तत्पतितमन्येन वाऽऽनीतं तदा कल्पते ग्रहीतुं, एतत्पुनरष्टापदोज्जयन्तादिषु भवेत्, एवमधःकूपादिषु विभाषा, तथा यत्तिर्यक्प्रमाणं गृहीतं तत्त्रिविधेन करणेन नातिक्रमितव्यं, क्षेत्रवृद्धिश्च न कर्त्तव्या, कथम्?, असौ पूर्वेण भाण्डं गृहीत्वा गतो यावत्परिमाणं, ततः परतो भाण्डमर्घं लभते इतिकृत्वा अपरेण यानि योजनानि तानि पूर्वदिक्परिमाणे क्षिपति, यदि च स्मृत्यन्तर्धानात्परिमाणमतिक्रान्तो भवेत्तदा ज्ञाते निवर्तितव्यं परतश्च न गन्तव्यं, अन्योऽपि न विसर्जनीयः, अयानाज्ञया कोऽपि गतो भवेत्तदा यत्तेन लब्धं स्वयं विस्मृत्य गतेन वा तन्न गृह्यते इति ॥ २८ ॥ अथ द्वितीयस्य-

सचित्तसंबद्धसंमिश्राभिषवदुष्पकाहारा इति ॥ २९ ॥ (१६२)

एव स्थापयतीत्यतोऽतिचारः ३ तथा दासीदासप्रमाणातिक्रम इति सर्वद्विपदचतुष्पदोपलक्षणमेतत्, तत्र द्विपदं-पुत्रकलत्रदासीदासकर्मकरशुकसारिकादि चतुष्पदं-गवोष्ट्रादि तेषां यत्परिमाणं तस्य गर्भाधानविधापनेनातिक्रमोऽतिचारो भवति, यथा किल केनापि संवत्सराद्यवधिना द्विपदचतुष्पदानां परिमाणं कृतं तेषां च संवत्सरमध्य एव प्रसवे अधिकद्विपदादिभावाद् व्रतभङ्गः स्यादिति तद्भयात् कियत्यपि काले गते गर्भग्रहणं कारयतो गर्भस्थद्विपदादिभावेन बहिर्गततदभावेन च कथञ्चिद् व्रतभङ्गादतिचारः ४ तथा कुप्यम्-आसनशयनादिगृहोपस्करः तस्य यन्मानं,तस्य पर्यायान्तरारोपणेनातिक्रमोऽतिचारो भवति, यथा किल केनापि दश करोटकानीति कुप्यस्य परिमाणं कृतं, ततस्तेषां कथञ्चिद् द्विगुणत्वे भूते सति व्रतभङ्गभयात्तेषां द्वयेन द्वयेन एकैकं महत्तरं कारयतः पर्यायान्तरकरणेन संख्यापूरणात्स्वाभाविकसंख्याबाधनाच्चातिचारः, अन्ये त्वाहुः—तदर्थित्वेन विवक्षितकालावधेः परतोऽहमेतत्करोटकादि कुप्यं गृहीष्याम्यतो नान्यस्मै देयमिति पराप्रदेयतया व्यवस्थापयत इति ५। यथाश्रुतत्वेन चैषामभ्युपगमे भङ्गातिचारयोर्न विशेषः स्यादिति तद्विशेषोपदर्शनार्थं मीलनवितरणादिना भावना दर्शितेति। यच्च क्षेत्रादिपरिग्रहस्य नवविधत्वे नवसंख्यातिचारप्राप्तौ पञ्चसंख्यत्वमुक्तं तत्सजातीयत्वेन शेषभेदानामत्रैवान्तर्भावात्, शिष्यहितत्वेन च प्रायः सर्वत्र मध्यमगतेर्विवक्षितत्वात् पञ्चकसंख्ययैवातिचारपरिगणनं, अतः क्षेत्रवास्त्वादिसंख्ययाऽतिचाराणामगणनमुपपन्नमिति ॥ २७ ॥ अथ प्रथमगुणव्रतस्य—

ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यन्तर्धानानीति ॥ २८ ॥ (१६१)

ऊर्ध्वाधस्तिर्यग्व्यतिक्रमाश्च क्षेत्रवृद्धिश्च स्मृत्यन्तर्धानं चेति समासः, तत्र ऊर्ध्वाधस्तिर्यक्क्षेत्रव्यतिक्रमलक्षणास्त्रयोऽ-

गुणः स्वयंगमने, ईर्यापथविशुद्धेः, परस्य पुनरनिपुणत्वात्तदशुद्धिरिति। इह चाद्यद्वयमव्युत्पन्नबुद्धित्वेन सहसाकारादिना वा अन्त्यत्रयं तु व्याजपरस्यातिचारतां यातीति। इहाहुर्वृद्धाः—दिग्व्रतसंक्षेपकरणमणुव्रतादिसंक्षेपकरणस्याप्युपलक्षणं द्रष्टव्यं, तेषामपि संक्षेपस्यावश्यं कर्त्तव्यत्वात्, प्रतिव्रतं च संक्षेपकरणस्य भिन्नव्रतत्वेन द्वादश व्रतानीति संख्याविरोधः स्यादिति, अत्र केचिदाहुः—दिग्व्रतसंक्षेप एव देशावकाशिकं, तदतिचाराणां दिग्व्रतानुसारितयैवोपलम्भाद्, अत्रोच्यते, यथोपलक्षणतया शेषव्रतसंक्षेपकरणमपि देशावकाशिकमुच्यते तथोपलक्षणतयैव तदतिचारा अपि तदनुसारिणो द्रष्टव्याः, अथवा प्राणातिपातादिसंक्षेपकरणेषु वन्धादय एवातिचारा घटन्ते, दिग्व्रतसंक्षेपे तु संक्षिप्तत्वात्क्षेत्रस्य शब्दानुपाताद्योऽपि स्युरिति भेदेन दर्शिताः, न च सर्वेषु व्रतभेदेषु विशेषतोऽतिचारा दर्शनीयाः, रात्रिभोजनादिव्रतभेदेषु तेषामदर्शितत्वादिति ॥ २२ ॥ अथ तृतीयस्य—

अप्रत्युपेक्षिताप्रमार्जितोत्सर्गा१ऽऽदाननिक्षेप२संस्तारोपक्रमणा३नादर४स्मृत्यनुपस्थापनानीति५॥३३॥(१६६)

इह 'पदेऽपि पदसमुदायोपचाराद्' अप्रत्युपेक्षितपदेनाप्रत्युपेक्षितदुष्प्रत्युपेक्षितः स्थण्डिलादिभूमिदेशः परिगृह्यते, अप्रमार्जितपदेन तु स एवाप्रमार्जितदुष्प्रमार्जित इति, तथा उत्सर्गश्चादाननिक्षेपौ चेति उत्सर्गादाननिक्षेपाः, ततोऽप्रत्युपेक्षिताप्रमार्जिते स्थण्डिलादावुत्सर्गादाननिक्षेपाः अप्रत्युपेक्षिताप्रमार्जितोत्सर्गादाननिक्षेपाः ततस्ते च संस्तारोपक्रमणं चानादरश्च स्मृत्यनुपस्थापनं चेति समासः, तत्राप्रत्युपेक्षिते—प्रथमत एव लोचनाभ्यामनिरीक्षिते प्रमादाद् भ्रान्तलोचनव्यापारेण वा न सम्यग् निरिक्षिते तथा अप्रमार्जिते—मूलत एव वस्त्राञ्चलादिना अपरामृष्टे, दुष्प्रमार्जिते अर्द्धप्रमार्जिते स्थण्डिलादौ यथार्हमुत्सर्गो—मूत्रपुरीषादीनामुज्झनीयानामादाननिक्षेपौ च पौषधोपवासोपयोगिनो धर्मोपकरणस्य पीठफलकादेर्द्वावतिचारौ स्यातामे-

सर्वविरतिसामायिकेऽपि तथाऽभ्युपगतत्वात्, यतो गुप्तिभङ्गे मिथ्यादुष्कृतं प्रायश्चित्तमुक्तं, यदाह—"बीओ उ असमिओमित्ति कीस सहसा अगुत्तो वा ?" [द्वितीयस्तु (प्राय०भेदः) असमितोऽस्मीति कथं ? सहसा अगुप्तो वा] द्वितीयोऽतिचारः समित्यादिभङ्गरूपोऽनुतापेन शुद्ध्यतीत्यर्थः, इति न प्रतिपत्तेरप्रतिपत्तिर्गरीयसीति, किंच—सातिचारानुष्ठानादप्यभ्यासतः कालेन निरतिचारमनुष्ठानं भवतीति, सूरयो यदाहुः—"अभ्यासोऽपि प्रायः प्रभूतजन्मानुगो भवति शुद्धः" (षोड०१३-१३) अथ द्वितीयस्य—

आनयन १ प्रेष्यप्रयोग २ शब्द ३ रूपानुपात ४ पुद्गलप्रक्षेपा ५ इति ॥ २२ ॥ (१६५)

आनयनं च प्रेष्यश्च आनयनप्रेष्यौ तयोः प्रयोगावानयनप्रेष्यप्रयोगौ तथा शब्दरूपयोरनुपातौ शब्दरूपानुपातौ आनयनप्रेष्यप्रयोगौ च शब्दरूपानुपातौ च पुद्गलप्रक्षेपश्चेति समासः, तत्रानयने—विवक्षितक्षेत्राद् वहिर्वर्त्तमानस्य सचेतनादिद्रव्यस्य विवक्षितक्षेत्रप्रापणे प्रयोगः, स्वयं गमने व्रतभङ्गभयादन्यस्य स्वयमेव वा गच्छतः संदेशादिना व्यापारणमानयनप्रयोगः, तथा प्रेष्यस्य-आदेश्यस्य प्रयोगो विवक्षितक्षेत्राद् वहिः प्रयोजनाय स्वयं गमने व्रतभङ्गभयादन्यस्य व्यापारणं प्रेष्यप्रयोगः, तथा शब्दस्य—कासितादिरूपस्य रूपस्य—स्वशरीराकारस्य विवक्षितक्षेत्राद्वहिर्व्यवस्थितस्याह्वानीयस्याह्वानाय श्रोत्रे दृष्टौ वानुपातः—अवतारणमिति योऽर्थः, अयमत्र भावः-विवक्षितक्षेत्राद्व हिर्वर्त्तमानं कञ्चन नरं व्रतभङ्गभयादाव्हातुमशक्नुवन् यदा काशितादिशब्दश्रावणस्वकीयरूपसंदर्शनद्वारेण तमाकारयति तदा व्रतसापेक्षत्वाच्छब्दानुपातरूपानुपातावतिचाराविति, तथा पुद्गलस्य—शर्करादेर्नियमितक्षेत्राद् वहिर्वर्त्तिनो जनस्य बोधनाय तदभिमुखं प्रक्षेपः पुद्गलप्रक्षेपः, देशावकाशिकव्रतं हि गृह्यते मा भूद् गमनागमनादिव्यापारजनितः प्राण्युपमर्द इत्यभिप्रायेण, स च स्वयं कृतोऽन्येन वा कारित इति न कश्चित्फले विशेषः, प्रत्युत

च सर्वाणि झाटयित्वा तडागादीनां तटे निविष्टोऽञ्जलिभिः स्नाति, तथा येषु पुष्पादिषु कुन्थ्वादयः सन्ति तानि परिहरतीति, अयं च प्रमादाचरितव्रत एव, विषयात्मकत्वादस्य ५, अपध्यानाचरितव्रते त्वनाभोगादिना अपध्याने प्रवृत्तिरनाचार इति स्वयमभ्यूह्यम्, कन्दर्पादय आकुट्ट्या क्रियमाणा भङ्गा एवावसेया इति ॥ ३० ॥ अथ प्रथमशिक्षापदस्य–

योगदुष्प्रणिधानानादरस्मृत्यनुपस्थापनानीति ५ ॥ ३१ ॥ (१६४)

योगदुष्प्रणिधानानि च अनादरश्च स्मृत्यनुपस्थापनं चेति समासः, तत्र योगाः–मनोवचनकायाः तेषां दुष्प्रणिधानानि–सावद्ये प्रवर्त्तनलक्षणानि योगदुष्प्रणिधानानि एते त्रयोऽतिचाराः, अनादरः पुनः–प्रबलप्रमादादिदोषाद् यथाकथञ्चित्करणं कृत्वा वाऽकृतसामायिककार्यस्यैव तत्क्षणमेव पारणमिति, स्मृत्यनुपस्थापनं पुनः स्मृतेः सामायिककरणावसरविषयायाः कृतस्य वा सामायिकस्य प्रबलप्रमाददोषादनुपस्थापनम्–अनवतारणं, एतदुक्तं भवति-कदा मया सामायिकं कर्त्तव्यं कृतं मया सामायिकं न वेत्येवंरूपस्य स्मरणस्य भ्रंश इति । ननु मनोदुष्प्रणिधानादिषु सामायिकस्य निरर्थकत्वादभाव एव प्रतिपादितो भवति, अतिचारश्च मालिन्यरूपो भवतीति कथं सामायिकाभावे ?, अतो भङ्गा एवैते नातिचाराः, सत्यं, किंत्वनाभोगतोऽतिचारत्वमिति, ननु द्विविधं त्रिविधेन सावद्यप्रत्याख्यानं सामायिकं, तत्र च मनोदुष्प्रणिधानादौ प्रत्याख्यानभङ्गात्सामायिकाभाव एव, तद्भङ्गजनितं प्रायश्चित्तं च स्यात्, मनोदुष्प्रणिधानं च दुष्परिहार्यं, मनसोऽनवस्थितत्वाद्, अतः सामायिकप्रतिपत्तेः सकाशात्तदप्रतिपत्तिरेव श्रेयसीति, नैवं, यतः सामायिकं द्विविधं त्रिविधेन प्रतिपन्नं, तत्र मनसा सावद्यं न करोमीत्यादीनि षट् प्रत्याख्यानानि इत्यन्यतरभङ्गेऽपि शेषसद्भावान्न सामायिकस्यात्यन्ताभावो, मिथ्यादुष्कृतेन मनोदुष्प्रणिधानमात्रशुद्धिश्च,

अथ तृतीयस्य—

**कन्दर्प १ कौकुच्य २ मौखर्या ३ समीक्ष्याधिकरणो ४ पभोगाधिकत्वानीति ५ ॥ ३० ॥ (१६३)**

कन्दर्पश्च कौकुच्यं च मौखर्यं चासमीक्ष्याधिकरणं चोपभोगाधिकत्वं चेति समासः, तत्र कन्दर्पः—कामः तद्धेतुर्विशिष्टो वाक्प्रयोगोऽपि कन्दर्प एव, मोहोद्दीपकं वाक्कर्मेति भावः, इह च सामाचारी—श्रावकस्याट्टहासो न कल्पते कर्तुं, यदि नाम हसितव्यं तदेषदेवेति १, तथा कुकुचः—कुत्सितसंकोचनादिक्रियायुक्तः तद्भावः कौकुच्यं—अनेकप्रकारमुखनयनादिविकारपूर्विका परिहासादिजनिता भाण्डानामिव विडम्बनक्रियेत्यर्थः, अत्र च सामाचारी-तादृशानि भणितुं न कल्पंते यादृशैर्लोकस्य हास्यमुत्पद्यते, एवं गत्या गन्तुं स्थानेन वा स्थातुमिति, एतौ च कन्दर्पकौकुच्याख्यावतिचारौ प्रमादाचरितव्रतस्यावसेयौ, प्रमादरूपत्वात्तयोः २, तथा मुखमस्यास्तीति मुखरस्तद्भावः कर्म वेति मौखर्यं-धाष्टर्यप्रायमसभ्यासत्यासंबद्धप्रलापित्वम्, अयं च पापोपदेशव्रतस्यातिचारो, मौखर्ये सति पापोपदेशसंभवात् ३, तथा असमीक्ष्यैव-तथाविधकार्यमपर्यालोच्यैव प्रवणतया यद् व्यवस्थापितमधिकरणं-वास्युदूखलशिलापुत्रकगोधूमयन्त्रकादि तदसमीक्ष्याधिकरणं, अत्र सामाचारी—श्रावकेण न संयुक्तानि शकटादीनि धारयितव्यानीति, अयं च हिंस्रप्रदानव्रतस्यातिचारः ४, तथा उपभोगस्य उपलक्षणत्वाद् भोगस्य च उक्तनिर्वचनस्याधिकत्वं—अतिरिक्तता उपभोगाधिकत्वं, इहापि सामाचारी—उपभोगातिरिक्तानि यदि बहूनि तैलामलकानि गृह्णन्ति तदा तल्लौल्येन बहवः स्नातुं तडागादौ व्रजन्ति, ततश्च पूतरकादिवधोऽधिकः स्याद्, एवं ताम्बूलादिष्वपि विभाषा, न चैवं कल्पते, ततः को विधिरुपभोगे ?—तत्र स्नाने तावद् गृहे एव स्नातव्यं, नास्ति चेत्तत्र सामग्री तदा तैलामलकैः शिरो घर्षयित्वा तानि

पठ्यते च—“ यद्यपि निर्गतभावस्तथाप्यसौ रक्ष्यते सद्भिरन्यैः ( परैः सद्भिः )। वेणुर्विलूनमूलोऽपि वंशगहने महीं नैति ॥ ११४ ॥ ” ४० ॥

तथा—वात्सल्यमेतेष्विति ॥ ४१ ॥ (१७४)

‘वात्सल्यम्’—अन्नपानताम्बूलादिप्रदानग्लानावस्थाप्रतिजागरणादिना सत्करणं ‘एतेषु’—साधर्मिकेषु कार्यं, तस्य प्रवचनसारत्वात्, उच्यते च—“ जिनशासनस्य सारो जीवदया, निग्रहः कषायाणाम् । साधर्मिकवात्सल्यं, भक्तिश्च तथा जिनेन्द्राणाम् ” ॥ ११५ ॥ ४१ ॥

तथा—धर्मचिन्तया स्वपनमिति ॥ ४२ ॥ (१७५)

धर्मचिन्तया—“ धन्यास्ते वन्दनीयास्ते, तैस्त्रैलोक्यं पवित्रितम् । यैरेष भुवनक्लेशी, काममल्लो विनिर्जितः ॥ ११६ ॥” इत्यादिशुभभावनारूपया स्वपनं—निद्राङ्गीकारः, शुभभावनासुप्तो हि तावन्तं कालमवस्थितशुभपरिणाम एव लभ्यत इति ॥४२॥

तथा—नमस्कारेणावबोध इति ॥ ४३ ॥ (१७६)

‘नमस्कारेण’ सकलकल्याणपुरपरमश्रेष्ठिभिः परमेष्ठिभिरधिष्ठितेन ‘नमो अरिहंताण’—मित्यादिप्रतीतरूपेण अवबोधो-निद्रापरिहारः, परमेष्ठिनमस्कारस्य महागुणत्वात्, पठ्यते च—“एष पञ्च नमस्कारः, सर्वपापप्रणाशनः। मङ्गलानां च सर्वेषां, प्रथमं भवति मङ्गलम् ॥ ११७ ॥

तथा—प्रयत्नकृतावश्यकस्य विधिना चैत्यादिवन्दनमिति ॥ ४४ ॥ (१७७)

'अत एव' विहितानुष्ठानवीर्यस्यातिचारजयहेतुत्वादेव 'तस्मिन्' विहितानुष्ठाने 'यत्नः' सर्वोपाधिशुद्ध उद्यमः कार्यं इति ॥ अन्यत्राप्युक्तम्—"तम्हा निच्चसईए बहुमाणेणं च अहिगयगुणंमि। पडिवक्खदुगुंछाए परिणइआलोयणेणं च ॥ १११॥ [तस्मात् नित्यस्मृत्या बहुमानेन वाऽधिकृतगुणे। प्रतिपक्षजुगुप्सया परिणत्यालोचनेन च॥१॥] तित्थंकरभत्तीए सुसाहुजणपज्जुवासणाए य। उत्तरगुणसद्धाए एत्थ सया होइ जइयवं ॥११२॥ [तीर्थकरभक्त्या सुसाधुजनपर्युपासनया च। उत्तरगुणश्रद्धया अत्र सदा भवति यतितव्यम् ॥२॥] एवमसंतोऽवि इमो जायइ जाओ य ण पडइ कयावि। ता एत्थं बुद्धिमया अपमाओ होइ कायवो त्ति (पञ्चा ३६–३७–३८) ॥ ११३ ॥ [एवमसन्नप्ययं जायते जातश्च न पतति कदाचित्। तद् अत्र बुद्धिमता अप्रमादो भवति कर्त्तव्यः॥ ३ ॥] साम्प्रतं सम्यक्त्वादिगुणेष्वलब्धलाभाय लब्धपरिपालनाय च विशेषतः शिक्षामाह—

सामान्यचर्याऽस्येति ॥ ३९ ॥ (१७२)

सामान्यानां—प्रतिपन्नसम्यक्त्वादिगुणानां सर्वेषां प्राणिनां साधारणा सा चासौ चर्या—चेष्टा च सामान्यचर्या 'अस्य' प्रतिपन्नविशेषगृहस्थधर्मस्य जन्तोरिति ॥ ३९ ॥ कीदृशीत्याह—

समानधार्मिकमध्ये वास इति ॥ ४० ॥ (१७३)

समानाः—तुल्यसमाचारतया सदृशाः उपलक्षणत्वादधिकाश्च ते धार्मिकाश्चेति समासः, तेषां मध्ये वासः—अवस्थानं, तत्र चायं गुणः—यदि कश्चित्तथाविधदर्शनमोहोदयाद्धर्माच्च्यवते ततस्तं स्थिरीकरोति, स्वयं वा प्रच्यवमानः तैः स्थिरीक्रियते,

एतद्रहिताणुव्रतादिपालनं विशेषतो गृहस्थधर्मं इति ॥ ३५ ॥ (१६८)

एतैः—अतिचारैः रहितानामणुव्रतादीनामुपलक्षणत्वात् सम्यक्त्वस्य च पालनं, किमित्याह-विशेषतो गृहस्थधर्मो भवति यः शास्त्रादौ प्राक् सूचित आसीदिति ॥ ३५ ॥ आह—उक्तविधिना प्रतिपन्नेषु सम्यक्त्वाणुव्रतादिष्वतिचाराणामसंभव एव, तत्कथमुक्तमेतद्रहिताणुव्रतादिपालनमित्याशङ्क्याह—

क्लिष्टकर्मोदयादतिचारा इति ॥ ३६ ॥ (१६९)

क्लिष्टस्य—सम्यक्त्वादिप्रतिपत्तिकालोत्पन्नशुद्धिगुणादपि सर्वथाऽव्यवच्छिन्नानुबन्धस्य कर्मणो—मिथ्यात्वादेरुदयाद्-विपाकात् सकाशादतिचाराः—शङ्कादयो वधबन्धादयश्च संपद्यन्ते, इदमुक्तं भवति—यदा तथाभव्यत्वपरिशुद्धिवशादत्यन्तमननुबन्धीभूतेषु मिथ्यात्वादिषु सम्यक्त्वादि प्रतिपद्यते तदाऽतिचाराणामसंभव एव, अन्यथा प्रतिपत्तौ तु स्युरप्यतिचारा इति ॥ ३६ ॥ तर्हि कथमेषां निवारणमित्याशङ्क्याह—

विहितानुष्ठानवीर्यतस्तज्जय इति ॥ ३७ ॥ (१७०)

विहितानुष्ठानं-प्रतिपन्नसम्यक्त्वादेर्नित्यानुस्मरणादिलक्षणं तदेव वीर्यं—जीवसामर्थ्यं तस्मात्, किमित्याह—'तज्जयः' तेषाम्—अतिचाराणां जयः—अभिभवः संपद्यते, यतो विहितानुष्ठानं सर्वापराधव्याधिविरेचनौषधं महदिति ॥३७॥ एतद्विषयमेवोपदेशमाह—

अत एव तस्मिन् यत्न इति ॥ ३८ ॥ (१७१)

क्लिष्टकर्मजयहेतवः

ताविति १–२ इह 'संस्तारोपक्रमण'मिति संस्तारकशब्दः शय्योपलक्षणं, तत्र शय्या–शयनं सर्वाङ्गीणं वसतिर्वा संस्तारकः–अर्द्धतृतीयहस्तपरिमाणः, ततः संस्तारकस्य प्रस्तावादप्रत्युपेक्षितस्याप्रमार्जितस्य चोपक्रमः–उपभोगः अतिचारोऽयं तृतीयः ३। अनादरस्मृत्यनुपस्थापने पुनर्द्वौ चतुर्थपञ्चमावतिचारौ ४–५ सामायिकातिचाराविव भावनीयाविति। इह संस्तारोपक्रमे इयं वृद्धसमाचारी–कृतपौषधोपवासो नाप्रत्युपेक्षितां शय्यामारोहति, संस्तारकं वा पौषधशालां वा सेवते, दर्भवस्त्रं वा शुद्धवस्त्रं वा भूम्यां संस्तृणाति, कायिकाभूमेश्चागतः पुनरपि संस्तारकं प्रत्युपेक्षतेऽन्यथाऽतिचारः स्यात्, एवं पीठादिष्वपि विभाषेति ॥ ३३ ॥ अथ चतुर्थस्य—

सचित्तनिक्षेप १ पिधान २ परव्यपदेश ३ मात्सर्य ४ कालातिक्रमा ५ इति ॥ ३४ ॥ (१६७)

सचित्तनिक्षेपपिधाने च परव्यपदेशश्च मात्सर्यं च कालातिक्रमश्चेति समासः, तत्र सचित्ते–सचेतने पृथिव्यादौ निक्षेपः–साधुदेयभक्तादेः स्थापनं सचित्तनिक्षेपः, तथा सचित्तेनैव बीजपूरादिना पिधानं–साधुदेयभक्तादेरेव स्थगनं सचित्तपिधानं, तथा परस्य–आत्मव्यतिरिक्तस्य व्यपदेशः परव्यपदेशः–परकीयमिदमन्नादिकमित्येवमदित्सावतः साधुसमक्षं भणनं परव्यपदेशः, तथा मत्सरः–असहनं साधुभिर्याचितस्य कोपकरणं तेन रङ्केन याचितेन दत्तमहं तु किं ततोऽपि हीन इत्यादिविकल्पो वा सोऽस्यास्तीति मत्सरी तद्भावो मात्सर्यं, तथा कालस्य–साधूचितभिक्षासमयस्यातिक्रमः–अदित्सयाऽनागतभोजनपश्चाद्भोजनद्वारेणोल्लङ्घनं कालातिक्रमोऽतिचार इति। भावना पुनरेवं–यदाऽनाभोगादिनाऽतिक्रमादिना वा एतानाचरति तदाऽतिचारोऽन्यदा तु भङ्ग इति ॥ ३४ ॥ एवमणुव्रतगुणव्रतशिक्षापदानि तदतिचारांश्चाभिधाय प्रस्तुते योजयन्नाह—

अशक्ये–पालयितुमपार्यमाणे तथाविधशक्तिसामग्र्यभावात् साधुधर्माभ्यासादौ भावेन–अन्तःकरणेन प्रतिबन्धः–आत्मनि नियोजनं, तस्यापि सदनुष्ठानफलत्वात्, यथोक्तम्–" नार्यां यथाऽन्यसक्तायास्तत्र भावे सदास्थिते । तद्योगः पापबन्धाय, तथा धर्मेऽपि दृश्यताम् ॥ १२० ॥" 'तद्योग' इति अन्यप्रसक्तनारीव्यापारः स्वकुटुम्बपरिपालनादिरूप इति ॥ ५६ ॥

तथा–तत्कर्तृषु प्रशंसोपचाराविति ॥ ५७ ॥ (१९०)

तत्कर्तृषु–आत्मानमपेक्ष्याशक्यानुष्ठानविधायिषु पुरुषसिंहेषु–'प्रशंसोपचारौ' प्रशंसा–मुहुर्मुहुर्गुणोत्कीर्त्तनरूपा, उपचारश्च–तदुचितान्नपानवसनादिना साहाय्यकरणमिति ॥ ५७ ॥

तथा–निपुणभावचिन्तनमिति ॥ ५८ ॥ (१९१)

निपुणानाम्–अतिनिपुणमतिसूक्ष्मभावगम्यानां भावानां–पदार्थानामुत्पादव्ययध्रौव्यस्वभावानां बन्धमोक्षादीनां वाऽनुप्रेक्षणं, यथा–" अनादिनिधने द्रव्ये, स्वपर्यायाः प्रतिक्षणम् । उन्मज्जन्ति निमज्जन्ति, जलकल्लोलवज्जले ॥ १२१ ॥ तथा–स्नेहाभ्यक्तशरीरस्य रेणुना श्लिष्यते यथा गात्रम् । रागद्वेषाक्लिन्नस्य कर्मबन्धो भवत्येवम् ॥१२२॥ (प्रशम.)" इत्यादीति ॥५८॥

तथा–गुरुसमीपे प्रश्न इति ॥ ५९ ॥ (१९२)

यदा पुनर्निपुणं चिन्त्यमानोऽपि कश्चिद्भावोऽतिगम्भीरतया स्वयमेव निश्चेतुं न पार्यते तदा गुरोः संविग्नस्य गीतार्थस्य च समीपे प्रश्नो–विशुद्धविनयपूर्वकं पर्यनुयोगः कार्यः, यथा भगवन्! नावबुद्धोऽयमर्थोऽस्माभिः कृतयत्नैरपि ततोऽस्मान् बोधयितुमर्हन्ति भगवन्त इति ॥ ५९ ॥

तथाविधशुद्धसमाचारसाधुसमीपे प्रागेव गृहादौ गृहीतस्य प्रत्याख्यानस्य अभिव्यक्तिः—गुरोः साक्षिभावसंपादनाय प्रत्युच्चारणम् ॥ ५१ ॥

ततो—जिनवचनश्रवणे नियोग इति ॥ ५२ ॥ (१८५)

संप्राप्तसम्यग्दर्शनादिः प्रतिदिनं साधुजनात् सामाचारीं शृणोतीति श्रावक इत्यन्वर्थसंपादनाय जिनवचनश्रवणे 'नियोगो'- नियमः कार्यः ॥ ५२ ॥

ततः—सम्यक् तदर्थालोचनमिति ॥ ५३ ॥ (१८६)

सम्यक्—संदेहविपर्ययानध्यवसायपरिहारेण तदर्थस्य—वचनाभिधेयस्य पुनः पुनर्विमर्शनं, अन्यथा 'वृथा श्रुतमचिन्तित' मितिवचनात् न किञ्चिच्छ्रवणगुणः स्यादिति ॥ ५३ ॥

ततः—आगमैकपरतेति ॥ ५४ ॥ (१८७)

आगमो—जिनसिद्धान्तः स एवैको न पुनरन्यः कश्चित् सर्वक्रियासु परः—प्रधानो यस्य स तथा तस्य भावः आगमैकपरता, सर्वक्रियास्वागममेवैकं पुरस्कृत्य प्रवृत्तिरिति भाव इति ॥ ५४ ॥

ततः—श्रुतशक्यपालनमिति ॥ ५५ ॥ (१८८)

श्रुतस्य—आगमादुपलब्धस्य शक्यस्य—अनुष्ठातुं पार्यमाणस्य पालनम्—अनुशीलनं सामायिकपौषधादेरिति ॥ ५४ ॥

तथा—अशक्ये भावप्रतिबन्ध इति ॥ ५६ ॥ (१८९)

तथा—विधिनाऽनुप्रवेश इति ॥ ४७ ॥ (१८०)

'विधिना' विधानेन चैत्यगृहे प्रवेशः कार्यः, अनुप्रवेशविधिश्चायम्—"सच्चित्ताणं दव्वाणं विउस्सरणयाए अचित्ताणं दव्वाणं अविउस्सरणयाए २ एगसाडिएणं उत्तरासंगेणं ३ चक्खुफासे अंजलिपग्गहेणं ४ मणसो एगत्तीकरणेणं ५"त्ति ॥४७॥ [सचित्तानां द्रव्याणां व्युत्सर्जनतया अचित्तानां द्रव्याणामव्युत्सर्जनतया एकशाटिकेनोत्तरासङ्गेन चक्षुःस्पर्शे अञ्जलिप्रग्रहेण मनस एकत्वीकरणेन ]

तत्र च—उचितोपचारकरणमिति ॥ ४८ ॥ (१८१)

उचितस्य—अर्हद्बिम्बानां योग्यस्य उपचारस्य—पुष्पधूपाद्यर्चनलक्षणस्य करणं—विधानम् ॥ ४८ ॥

ततो—भावतः स्तवपाठ इति ॥ ४९ ॥ (१८२)

दरिद्रनिधिलाभादिसंतोषोपमानोपमेयाद् भावतो—भावात् संतोषलक्षणात् स्तवानां—गम्भीराभिधेयानां सद्भूतगुणोद्भावनाप्रधानानां नमस्कारस्तवलक्षणानां पाठः—समुचितेन ध्वनिना समुच्चारणम् ॥ ४९ ॥

ततः—चैत्यसाधुवन्दनमिति ॥ ५० ॥ (१८३)

चैत्यानाम्—अर्हद्बिम्बानामन्येषामपि भावार्हत्प्रभृतीनां साधूनां च व्याख्यानाद्यर्थमागतानां वन्दनीयानां वन्दनम्—अभिष्टवनं प्रणिपातदण्डकादिपाठक्रमेण द्वादशावर्त्तवन्दनादिना च प्रसिद्धरूपेणैवेति ॥ ५० ॥

ततः—गुरुसमीपे प्रत्याख्यानाभिव्यक्तिरिति ॥ ५१ ॥ (१८४)

प्रयत्नेन–प्रयत्नवता कृतान्यावश्यकानि–मूत्रपुरीषोत्सर्गाङ्गप्रक्षालनशुद्धवस्त्रग्रहणादीनि येन स तथा तस्य 'विधिना' पुष्पादिपूजासंपादनमुद्रान्यसनादिना प्रसिद्धेन चैत्यवन्दनं–प्रसिद्धरूपमेव, आदिशब्दान्मातापित्रादिगुरुवन्दनं च, यथोक्तम्–" चैत्यवन्दनतः सम्यक्, शुभो भावः प्रजायते। तस्मात् कर्मक्षयः सर्वः, ततः कल्याणमश्नुते ॥ ११८ ॥" ( ललि. ) इत्यादीनि ॥ ४४ ॥

तथा–सम्यक्प्रत्याख्यानक्रियेति ॥ ४५ ॥ (१७८)

'सम्यगि'ति क्रियाविशेषणं, ततः सम्यग्–यथा भवति तथा मानक्रोधानाभोगादिदोषपरिहारवशात् प्रत्याख्यानस्य मूलगुणगोचरस्योत्तरगुणगोचरस्य च क्रिया–ग्रहणरूपा, परिमितसावद्यासेवनेऽपि अपरिमितपरिहारेण प्रत्याख्यानस्य महागुणत्वात्, यथोक्तम्–" परिमितमुपभुञ्जानो ह्यपरिमितमनन्तकं परिहरंश्च। प्राप्नोति च परलोके ह्यपरिमितमनन्तकं सौख्यम् ॥ ११९ ॥" इति ४५ ॥

तथा–यथोचितं चैत्यगृहगमनमिति ॥ ४६ ॥ (१७९)

'यथोचितं' यथायोग्यं 'चैत्यगृहगमनं' चैत्यगृहे–जिनभवनलक्षणे अर्हद्बिम्बवन्दनाय प्रत्याख्यानक्रियानन्तरमेव गमनमिति, इह द्विविधः श्रावको भवति–ऋद्धिमांस्तदितरश्च, तत्रर्द्धिमान् राजादिरूपः स सर्वस्वपरिवारसमुदायेन व्रजति, एवं हि तेन प्रवचनप्रभावना कृता भवति, तदितरोऽपि स्वकुटुम्बसंयोगेनैति, समुदायकृतानां कर्मणां भवान्तरे समुदायेनैवोपभोगात् ॥ ४६ ॥

नामत्र ॥ १२८ ॥ ” ॥ ७१ ॥

तथा–लोकापवादभीरुतेति ॥ ७२ ॥ (२०५)

लोकापवादात्–सर्वंजनापरागलक्षणात् भीरुता–अत्यन्तभीतभावः, किमुक्तं भवति ?–निपुणमत्या विचिन्त्य तथा तथोचितवृत्तिप्रधानतया सततमेव प्रवर्त्तितव्यं यथा यथा सकलसमीहितसिद्धिविधायिजनप्रियत्वमुज्जृम्भते, न पुनः कथञ्चिदपि जनापवादः, तस्य मरणादपि विशिष्यमाणत्वात्, तथा चावाचि–“वचनीयमेव मरणं भवति कुलीनस्य लोकमध्येऽस्मिन्। मरणं तु कालपरिणतिरियं च जगतोऽपि सामान्या ॥ १२९ ॥ ” ॥ ७२ ॥

तथा–गुरुलाघवापेक्षणमिति ॥ ७३ ॥ (२०६)

सर्वप्रयोजनेषु धर्मार्थकामरूपेषु तत्तत्कालादिबलालोचनेन प्रारब्धुमिष्टेषु प्रथमत एव मतिमता गुरोः–भूयसो गुणलाभपक्षस्य लघोश्च-तदितररूपस्य भावो गुरुलाघवं तस्य निपुणतया अपेक्षणम्–आलोचनं कार्यमिति ततः ॥ किमित्याह–

बहुगुणे प्रवृत्तिरिति ॥ ७४ ॥ (२०७)

प्रायेण हि प्रयोजनानि गुणलाभमिश्राणि, ततो बहुगुणे प्रयोजने प्रवृत्तिः–व्यापारः, तथा चार्षम्–“अप्पेण बहुमेसेज्जा, एयं पंडियलक्खणं। सव्वासु पडिसेवासु, एवं अट्ठपयं विऊ ॥ १२९ ॥ ” [ अल्पेन बहु एषेत एतत् पण्डितलक्षणम्। सर्वासु प्रतिषेवासु एतदर्थपदं विदुः ॥ १ ॥ ] ॥ ७४ ॥

तथा-चैत्यादिपूजापुरःसरं भोजनमिति ॥ ७५ ॥ (२०८)



निन्दना

'विभवोचितं' स्वविभवानुसारेण 'विधिना' अनन्तरमेव निर्देक्ष्यमाणेन क्षेत्रेभ्यो-निर्देक्ष्यमाणेभ्य एव दानम्-अन्नपानौषधवस्त्रपात्राद्युचितवस्तुवितरणम् ॥६८॥ विधिं क्षेत्रं च स्वयमेव निर्दिशन्नाह—

सत्कारादिर्विधिर्निःसङ्गता चेति ॥ ६९ ॥ (२०२)

सत्करणं सत्कारः—अभ्युत्थानासनप्रदानवन्दनरूपो विनयः स आदिर्यस्य देशकालाराधनविशुद्धश्रद्धाविष्करणदान-क्रमानुक्रमादेः कुशलानुष्ठानविशेषस्य स तथा, किमित्याह-विधिर्वर्त्तते, 'निःसङ्गता' ऐहिकपारलौकिकफलाभिलाषविकलतया सकलक्लेशलेशाकलङ्कितमुक्तिमात्राभिसन्धिता, चकारः समुच्चये ॥ ६९ ॥

वीतरागधर्मसाधवः क्षेत्रमिति ॥ ७० ॥ (२०३)

वीतरागस्य—जिनस्य धर्मः—उक्तनिरुक्तः तत्प्रधानाः साधवो वीतरागधर्मसाधवः क्षेत्रं—दानार्हं पात्रमिति, तस्य च विशेषलक्षणमिदम्—" क्षान्तो दान्तो मुक्तो जितेन्द्रियः सत्यवागभयदाता । प्रोक्तस्त्रिदण्डविरतो विधिग्रहीता भवति पात्रम् ॥ १२७ ॥" ७० ॥

तथा—दुःखितेष्वनुकम्पा यथाशक्ति द्रव्यतो भावतश्चेति ॥ ७१ ॥ (२०४)

'दुःखितेषु'-भवान्तरोपात्तपापपाकोपहितातितीव्रक्लेशावेशेषु देहिष्वनुकम्पा-कृपा कार्या 'यथाशक्ति' स्वसामर्थ्यानुरूपं, द्रव्यतः-तथाविधग्रासादेः सकाशात्, भावतो-भीषणभवभ्रमणवैराग्यसंपादनादिरूपात्, चः समुच्चये, दुःखितानुकम्पा हि तदुप-कारत्वेन धर्मैकहेतुः, यथोक्तम्—" अन्योपकारकरणं धर्माय महीयसे च भवतीति । अधिगतपरमार्थानामविवादो वादि-

तथा–द्रव्ये संतोषपर (प्रधान) तेति ॥ ६५ ॥ (१९८)

'द्रव्ये' धनधान्यादौ विषये 'संतोषप्रधानता' परिमितेनैव निर्वाहमात्रहेतुना द्रव्येण संतोषवता धार्मिकेणैव भवितव्यमित्यर्थः, असंतोषस्यासुखहेतुत्वात्, यदुच्यते–"अत्युष्णात् सघृतादन्नादच्छिद्रात्सितवाससः । अपरप्रेष्यभावाच्च, शेषमिच्छन् पतत्यधः ॥ १२४ ॥" इति, तथा "संतोषामृततृप्तानां, यत्सुखं शान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ? ॥ १२५ ॥ " ॥ ६५ ॥

तथा–धर्मे धनबुद्धिरिति ॥ ६६ ॥ (१९९)

'धर्मे'-श्रुतचारित्रात्मके सकलाभिलषिताविकलसिद्धिमूले 'धनबुद्धिः' मतिमतां धर्म एव धनमिति परिणामरूपा निरन्तरं निवेशनीयेति ॥६६॥

तथा–शासनोन्नतिकरणमिति ॥ ६७ ॥ (२००)

शासनस्य–निखिलहेयोपादेयभावाविर्भावनभास्करकल्पस्य जिननिरूपितवचनरूपस्य उन्नतिः–उच्चैर्भावस्तस्याः करणं सम्यग्न्यायव्यवहरण १ यथोचितजनविनयकरण २ दीनानाथाभ्युद्धरण ३ सुविहितयतिपुरस्करण ४ परिशुद्धशीलपालन ५ जिनभवनविधापन ६ यात्रास्नात्रादिनानाविधोत्सवसंपादना ७ दिभिरुपायैः, तस्यातिमहागुणत्वादिति, पठ्यते च– "कर्त्तव्या चोन्नतिः सत्यां, शक्ताविह नियोगतः । अवन्ध्यं कारणं ह्येषा, तीर्थकृन्नामकर्मणः ॥१२६॥ (ह० अष्टके) ॥६७॥

तथा–विभवोचितं विधिना क्षेत्रदानमिति ॥ ६८ ॥ (२०१)

तथा—निर्णयावधारणमिति ॥ ६० ॥ (१९३)

निर्णयस्य—निश्चयकारिणो वचनस्य गुरुणा निरूपितस्य 'अवधारणं'—दत्तावधानतया ग्रहणम्, भणितं चान्यत्रापि— "सम्मं वियारियव्वं अट्ठपयं भावणापहाणेणं । विसए य ठावियव्वं बहुसुयगुरुणो सयासाओ ॥ १२३ " ( पञ्च०८६९ ) [ सम्यग् विचारयितव्यमर्थपदं भावनाप्रधानेन । विषये च स्थापयितव्यं बहुश्रुतगुरोः सकाशात् ॥ १ ॥ ] ॥ ६० ॥

तथा—ग्लानादिकार्याभियोग इति ॥ ६१ ॥ (१९४)

ग्लानादीनां—ग्लानबालवृद्धागमग्रहणोद्यतप्राघूर्णकादिलक्षणानां साधुसाधर्मिकाणां यानि कार्याणि—प्रतिजागरणौपधान्नपानवस्त्रप्रदानपुस्तकादिसमर्पणोपाश्रयनिरूपणादिलक्षणानि तेष्वभियोगो—दत्तावधानता विधेयेति ॥ ६१ ॥

तथा—कृताकृतप्रत्युपेक्षेति ॥ ६२ ॥ (१९५)

कृतानां अकृतानां च चैत्यकार्याणां ग्लानादिकार्याणां च प्रत्युपेक्षा—निपुणाभोगविलोचनव्यापारेण गवेषणं, तत्र कृतेषु करणाभावादकृतकरणायोद्यमो विधेयः, अन्यथा निष्फलशक्तिक्षयप्रसंगादिति ॥ ६२ ॥

ततश्च—उचितवेलयाऽऽगमनमिति ॥ ६३ ॥ (१९६)

उचितवेलया—हट्टव्यवहारराजसेवादिप्रस्तावलक्षणया 'आगमनं' चैत्यभवनाद् गुरुसमीपाद्वा गृहादाविति ॥६३॥

ततो—धर्मप्रधानो व्यवहार इति ॥ ६४ ॥ (१९७)

'कुलक्रमागत'मित्यादिसूत्रोक्तानुष्ठानरूपो व्यवहारः कार्यः ॥ ६४ ॥

'तथे'ति विध्यन्तरसमुच्चयार्थः 'गुरुनिवेदनं' सर्वात्मना गुरोः-प्रव्राजकस्यात्मसमर्पणं कार्यमिति ॥ ३२ ॥ इत्थं प्रव्राज्यगतं विधिमभिधाय प्रव्राजकगतमाह—

अनुग्रहधियाऽभ्युपगम इति ॥ ३३ ॥ (२५०)

गुरुणा 'अनुग्रहधिया' सम्यक्त्वादिगुणारोपणबुद्ध्या 'अभ्युपगमः' प्रव्राजनीयस्त्वमित्येवंरूपः कार्यो, न पुनः स्वपरिषत्पूरणादिबुद्ध्येति ॥ ३३ ॥

तथा—निमित्तपरीक्षेति ॥ ३४ ॥ (२६०)

निमित्तानां—भाविकार्यसूचकानां शकुनादीनां परीक्षा—निश्चयनं कार्यं, निमित्तशुद्धेः प्रधानविधित्वात् इति ॥ ३४ ॥

तथा—उचितकालापेक्षणमिति ॥ ३५ ॥ (२६१)

उचितस्य—प्रव्रज्यादानयोग्यस्य कालस्य-विशिष्टतिथिनक्षत्रादियोगरूपस्य गणिविद्यानामप्रकीर्णकनिरूपितस्यापेक्षणम् आदरणमिति, यतस्तत्र पठ्यते—" तिहि उत्तराहिं तह रोहिणीहिं कुज्जा उ सेहनिक्खमणं। गणिवायए अणुन्ना महव्वयाणं च आरुहणा ॥ १५० ॥ तथा चउद्दसीं पन्नरसिं वज्जेज्जा अट्ठमिं च नवमिं च। छट्ठिं च चउत्थिं वारसिं च दोण्हंपि पक्खाणं ॥ १५१ ॥" (पञ्च. ११२–११३) [तिसृपूत्तरासु तथा रोहिण्यां कुर्यात्तु शैक्षनिष्क्रमणम्। गणिवाचकयोरनुज्ञां महाव्रतानां चारोपणा ॥ १ ॥ चतुर्दशीं पञ्चदशीं वर्जयेत् अष्टमीं नवमीं च। षष्ठीं च चतुर्थीं द्वादशीं च द्वयोरपि पक्षयोः ॥२॥ ] ॥३५॥

तथा—उपायतः कायपालनमिति ॥ ३६ ॥ (२६२)

गुर्वादेः तत्र व्रजनो नियमघाती वैद्यौपधादिरहितपुरुपमात्रासाध्यः तथाविधौपधादिप्रयोगयोग्यश्च महानातङ्कः स्यात्, तत्र
चासौ तत्प्रतिबन्धादेवमालोचयति–यथा न भवति नियमादेप गुरुजनो नीरुक् औपधादिमन्तरेण, औपधादिभावे च संशयः
कदाचित्स्यात् कदाचिन्नेति, कालसहश्चायं, ततः संस्थाप्य तथाविधचित्रवचनोपन्यासेन तं तदौपधादिनिमित्तं स्ववृत्तिहेतोश्च
त्यजन् सन्नसौ साधुरेव भवति, एप हि त्यागोऽत्याग एव, यः पुनरत्यागः स परमार्थतस्त्याग एव, यतः फलमत्र प्रधानं,
धीराश्चैतद्दर्शिन एव भवन्ति, तत औषधसंपादनेन तं जीवयेदपीति संभवात्, सत्पुरुपोचितमेतत् । एवं शुक्लपाक्षिको महापुरुपः
संसारकान्तारपतितो मातापित्रादिसंगतो धर्मप्रतिबद्धो विहरेत्, तेपां च तत्र नियमविनाशकोऽप्राप्तसम्यक्त्वबीजादिना
पुरुपमात्रेण साधयितुमशक्यः संभवत्सम्यक्त्वाद्यौपधो दर्शनमोहाद्युदयलक्षणः कर्मातङ्कः स्यात्, तत्र स शुक्लपाक्षिकः पुरुपो
धर्मप्रतिबन्धादेवं समालोचयति, यदुत-विनश्यन्त्येतान्यवश्यं सम्यक्त्वाद्यौपधविरहेण, तत्संपादने विभापा, कालसहानि चेमानि
व्यवहारतस्ततो यावद्गृहवासं निर्वाहादिचिन्तया तथा तथा संस्थाप्य तेपां सम्यक्त्वाद्यौपधनिमित्तं स्वचारित्रलाभनिमित्तं च
स्वकीयौचित्यकरणेन त्यजन् सन्नभीष्टसंयमसिद्ध्या साधुरेव, एप त्यागोऽत्यागस्तत्त्वभावनातः, अत्याग एव च त्यागो मिथ्या-
भावनातः, तत्त्वफलमत्र प्रधानं बुधानां, यतो धीरा एतद्दर्शिन आसन्नभव्याः, एवं च तानि सम्यक्त्वाद्यौपधसंपादनेन
जीवयेदात्यन्तिकं, अपुनर्मरणेनामरणावन्ध्यबीजयोगेन संभवात्, सुपुरुपोचितमेतद्, यतो दुष्प्रतिकारौ नियमान्मातापितरौ
शेपश्च यथोचितं स्वजनलोकः, एप धर्मः सज्जनानां, भगवानत्र ज्ञातं परिहरन्नकुशलानुबन्धिमातापित्रादिशोकमिति ॥ ३१ ॥
तथा–गुरुनिवेदनमिति ॥ ३२ ॥ (२५८)

**न धर्मे मायेति ॥ २८ ॥ (२५४)**

'न' नैव धर्मे साध्ये माया क्रियमाणा 'माया' वञ्चना भवति, परमार्थतोऽमायात्वात्तस्याः ॥२८॥ एतदपि कुत इत्याह–

**उभयहितमेतदिति ॥ २९ ॥ (२५५)**

उभयस्य-स्वस्य गुर्वादिजनस्य च हितं-श्रेयोरूपं एतद्–एवं प्रव्रज्याविधौ मायाकरणं, एतत्फलभूतायाः प्रव्रज्यायाः स्वपरोपकारकत्वात्, पठ्यते च–" अमायोऽपि हि भावेन, माय्येव तु भवेत्कचित्। पश्येत्स्वपरयोर्यत्र, सानुबन्धं हितोदयम् ॥ ॥१४९॥" अथेत्थमपि कृते तं विना गुर्वादिजनो निर्वाहमलभमानो न तं प्रव्रज्यार्थमनुजानीते तदा किं विधेयमित्याशङ्क्याह–

**यथाशक्ति सौविहित्यापादनमिति ॥ ३० ॥ (२५६)**

'यथाशक्ति'–यस्य यावती शक्तिः शतसहस्रादिप्रमाणनिर्वाहहेतुद्रव्यादिसमर्पणरूपा तया सौविहित्यस्य–सौस्थ्यस्यापादनं–विधानं येन प्रव्रजितेऽपि तस्मिन्नसौ न सीदति, तस्य निर्वाहोपायस्य करणमिति भावः, एवं कृते कृतज्ञता कृता भवति, करुणा च मार्गप्रभावनाबीजं, ततस्तेनानुज्ञातः प्रव्रजेदिति ॥३०॥ अथैवमपि न तं मोक्तुमसावुत्सहते तदा–

**ग्लानौषधादिज्ञातात्त्याग इति ॥ ३१ ॥ (२५७)**

ग्लानस्य–तथाविधव्याधिबाधावशेन ग्लानिमागतस्य गुर्वादेर्लोकस्य औषधादिज्ञातात्–औषधस्य आदिशब्दात्स्वनिर्वाहस्य च ग्रहः, तस्य गवेषणमपि औषधादीत्युच्यते, ततो ग्लानौषधाद्येव ज्ञातं–दृष्टान्तः तस्मात् त्यागः कार्यो गुर्वादेरिति, इदमुक्तं भवति–यथा कश्चित्कुलपुत्रकः कश्चिदपारं कान्तारं गतो मातापित्रादिसमेतः तत्प्रतिबद्धश्च तत्र व्रजेत्, तस्य च

तथा-गुरुजनाद्यनुज्ञेति ॥ २३ ॥ (२४९)

गुरुजनो-मातापित्रादिलक्षणः, आदिशब्दात् भगिनीभार्यादिशेषसंबन्धिलोकपरिग्रहः. तस्य अनुज्ञा-प्रव्रज त्वमित्यनुमतिरूपा, विधिरित्यनुवर्त्तते ॥ २३ ॥ यदा पुनरसौ तत्तदुपायतोऽनुज्ञापितोऽपि न मुञ्चति तदा यद्विधेयं तदाह—

तथा तथोपधायोग इति ॥ २४ ॥ (२५०)

'तथा तथा' तेन तेन प्रकारेण सर्वथा परैरनुपलक्ष्यमाणेन 'उपधायोगः' मायायाः प्रयोजनम् ॥२४॥ कथमित्याह—

दुःस्वप्नादिकथनमिति ॥ २५ ॥ (२५१)

दुःस्वप्नस्य-खरोष्ट्रमहिषाद्यारोहणादिदर्शनरूपस्य आदिशब्दान्मातृमण्डलादिविपरीतालोकनादिग्रहः तस्य कथनं-गुर्वादिनिवेदनमिति ॥ २५ ॥

तथा-विपर्ययलिङ्गसेवेति ॥ २६ ॥ (२५२)

विपर्ययः-प्रकृतिविपरीतभावः स एव मरणसूचकत्वात् लिङ्गं तस्य सेवा-निषेवणं कार्यं येन स गुर्वादिजनः संनिहितमृत्युरयमित्यवबुध्य प्रव्रज्यामनुजानीते इति ॥ २६ ॥ विपर्ययलिङ्गानि तेषु स्वयमेवाबुध्यमानेषु किं कृत्यमित्याह—

दैवज्ञैस्तथा तथा निवेदनमिति ॥ २७ ॥ (२५३)

'दैवज्ञैः' निमित्तशास्त्रपाठकैः 'तथा तथा' तेन तेन निमित्तशास्त्रपाठादिरूपेणोपायेन 'निवेदनं' गुर्वादिजनस्य ज्ञापनं, विपर्ययलिङ्गानामेव कार्यमिति ॥ २७ ॥ नन्वेवं मायाविनः प्रव्रज्याप्रतिपत्तावपि को गुणः स्यादित्याशङ्क्याह—

उपस्थितस्य प्रश्नाचारकथनपरीक्षादिर्विधिरिति ॥ २२ ॥ (२४८)

'उपस्थितस्य' स्वयं प्रव्रज्यां ग्रहीतुं समीपमागतस्य, प्रश्नश्च आचारकथनं च परीक्षा च प्रश्नाचारकथनपरीक्षाः ता आदिर्यस्य स तथा, आदिशब्दात् कण्ठतः सामायिकादिसूत्रप्रदानतथाविधानुष्ठानाभ्यासग्रहः, 'विधिः' क्रमः प्रव्रज्याप्रदाने पूर्वसूचित एषः, इदमुक्तं भवति—सद्धर्मकथाक्षिप्ततया प्रव्रज्याभिमुख्यमागतो भव्यजन्तुः पृच्छनीयः, यथा को वत्स ! त्वं किं निमित्तं वा प्रव्रजसि ?, ततो यद्यसौ कुलपुत्रकः तगरानगरादिसुन्दरक्षेत्रोत्पन्नः सर्वाशुभोद्भवभवव्याधिक्षयनिमित्तमेवाहं भगवन् ! प्रव्रजितुमुद्यत इत्युत्तरं कुरुते तदाऽसौ प्रश्नशुद्धः ?, ततोऽस्य दुरनुचरा प्रव्रज्या कापुरुषाणां, आरम्भनिवृत्तानां पुनरिह परभवे च परमः कल्याणलाभः; तथा यथैव जिनानामाज्ञा सम्यगाराधिता मोक्षफला तथैव विराधिता संसारफलदुःखदायिनी तथा यथा कुष्ठादिव्याधिमान् क्रियां प्राप्तकालां प्रतिपद्यापथ्यमासेवमानो अप्रवृत्तादधिकं शीघ्रं च विनाशमाप्नोति एवमेव भाववक्रियां संयमरूपां कर्मव्याधिक्षयनिमित्तं प्रपद्य पश्चादसंयमापथ्यसेवी अधिकं कर्म समुपार्जयतीत्येवं तस्य साध्वाचारः कथनीय इति २, एवं कथितेऽपि साध्वाचारे निपुणमसौ परीक्षणीयः, यतः—"असत्याः सत्यसंकाशाः, सत्याश्चासत्यसंनिभाः । दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणम् ॥ १४७ ॥ अतथ्यान्यपि तथ्यानि, दर्शयन्त्यतिकौशलाः । चित्रे निम्नोन्नतानीव, चित्रकर्मविदो जनाः ॥ १४८ ॥" परीक्षा च सम्यक्त्वज्ञानचारित्रपरिणतिविषया तैस्तैरुपायैर्विधेया, परीक्षाकालश्च प्रायः षण्मासाः, तथाविधपात्रापेक्षया तु अल्पो बहुश्च स्यात् ३, तथा सामायिकसूत्रं अकृतोपधानस्यापि कण्ठतो वितरणीयं, अन्यदपि सूत्रं पात्रतामपेक्ष्याध्यापयितव्यम् ४ ॥ २२ ॥

प्रव्रज्यादानेविधिः सू. २२

'सा' पूर्वसूत्रसूचिता योग्यता 'तत्त्वतः' परमार्थवृत्त्या प्रवर्त्तते, अतो न पादगुणहीनादिचिन्ता कार्येत्येतत् 'सुरगुरुः' बृहस्पतिरुवाचेति ॥ १९ ॥

**सर्वमुपपन्नमिति सिद्धसेन इति ॥ २० ॥ (२४६)**

समस्तेष्वपि धर्मार्थकाममोक्षव्यवहारेषु पुरुषपराक्रमसाध्येषु विषये यद् यद् उपपन्नं-घटमानं निमित्ततया बुद्धिमद्भिरुत्प्रेक्ष्यते तत्सर्वमखिलं सेत्यनुवर्त्तते, उपपन्नत्वस्य योग्यताया अभिन्नत्वादिति, 'सिद्धसेनो' नीतिकारः शास्त्रकृद्विशेषो जगाद ॥ २० ॥ इत्थं दश परतैर्थिकमतान्युपदर्श्य स्वमतमुपदर्शयन्नाह—

**भवन्ति त्वल्पा अपि असाधारणगुणाः कल्याणोत्कर्षसाधका इति ॥ २१ ॥ (२४७)**

'भवन्ति' न न भवन्ति तुः पूर्वमतेभ्योऽस्य वैशिष्ट्यख्यापनार्थः 'अल्पा अपि' परिमिता अपि, किं पुनरनल्पा इत्यपिशब्दार्थः, 'गुणा' आर्यदेशोत्पन्नवादयः 'असाधारणाः' सामान्यमानवेष्वसंभवन्तः 'कल्याणोत्कर्षसाधकाः' प्रव्रज्याद्युत्कृष्टकल्याणनिष्पादकाः, असाधारणगुणानां नियमादितरगुणाकर्षणावन्ध्यकारणत्वादिति युक्तमुक्तमादौ यदुत 'पादार्द्धगुणहीनौ मध्यमावरौ योग्या' विति। अत्र वायुवाल्मीकिव्यासैस्त्राङ्नारदवसुक्षीरकदम्बकमतानां कस्यचित्केनापि संवादेऽप्यन्यतरेण निराक्रियमाणत्वादनादरणीयतैव, विश्वसुरगुरुसिद्धसेनमतेषु च यद्यसाधारणगुणानादरणेन योग्यताङ्गीक्रियते तदा न सम्यक्, तस्याः परिपूर्णकार्यासाधकत्वात्, अथान्यथा तदाऽस्मन्मतानुवाद एव तैः शब्दान्तरेण कृतः स्यात्, न पुनः स्वमतस्थापनं किञ्चित् इति ॥ इत्युक्तौ प्रव्राज्यप्रव्राजकौ, अधुना प्रव्रज्यादानविधिमभिधित्सुराह—

'सोऽपि' गुणोत्कर्षः, किं पुनर्गुणमात्राद् गुणान्तरसिद्धिरित्यपिशब्दार्थः, 'एवमेव' पूर्वगुणानामुत्तरोत्तरगुणारम्भकत्वेन 'भवति' निष्पद्यते, निर्बीजस्य कस्यचित्कार्यस्य कदाचिदप्यभावादित्येतद् 'वसुः' समयप्रसिद्धो राजविशेषो निगदति, एष च मनाग् न्यासमनानुसारीति ॥ १६ ॥

अयुक्तं कार्षापणधनस्य तदन्यविढपनेऽपि कोटिव्यवहारारोपणमिति क्षीरकदम्बक इति ॥ १७ ॥ (२४३)

'अयुक्तं' अघटमानकं 'कार्षापणधनस्य' अतिजघन्यरूपकविशेषसर्वस्वस्य व्यवहारिणो लोकस्य 'तदन्यविढपनेऽपि' तस्मात्-कार्षापणादन्येषां-कार्षापणादीनां विढपने-उपार्जने, किं पुनस्तदन्याविढपने इत्यपिशब्दार्थः, 'कोटिव्यवहारारोपणं' कोटिप्रमाणानां दीनारादीनां व्यवहारे आत्मन आरोपणमिति, यतोऽतिबहुकालसाध्योऽयं व्यवहारो, न च तावन्तं कालं व्यवहारिणां जीवितं संभाव्यते, एवं च क्षीरकदम्बनारदयोर्न कश्चिन्मतभेदो यदि परं वचनकृत एवेति ॥

न दोषो योग्यतायामिति विश्व इति ॥ १८ ॥ (२४४)

'न' नैव 'दोषः' अघटनालक्षणः कश्चित् योग्यतायां-कार्षापणधनस्यापि तथाविधभाग्योदयात्प्रतिदिनं शतगुणसहस्रगुणादिकार्षापणोपार्जनेन कोटिव्यवहारारोपणोचितत्वलक्षणायां, श्रूयन्ते च केचित्पूर्वं तुच्छव्यवहारा अपि तथाविधभाग्यबलेन स्वल्पेनैव कालेन कोटिव्यवहारमारूढा इत्येतत् 'विश्वो' विश्वनामा प्रवादी प्राहेति, अयं च मनाक् सप्राणमतमनुसरतीति ॥२४४॥

अन्यतरवैकल्येऽपि गुणबाहुल्यमेव सा तत्त्वत इति सुरगुरुरिति ॥ १९ ॥ (२४५)

अन्यतरस्य—कस्यचिद् गुणस्य वैकल्येऽपि, किं पुनरवैकल्ये इत्यपिशब्दार्थः, 'गुणबाहुल्यमेव' गुणभूयस्त्वमेव

नैतदेवमिति सम्राडिति ॥ १२ ॥ (२३८)

नैतदेवं भाग्वत् 'सम्राट्' राजर्षिविशेषः प्राह ॥ १२ ॥ कुत इत्याह—

संभवादेव श्रेयस्त्वसिद्धेरिति ॥ १३ ॥ (२३९)

'संभवादेव' योग्यत्वादेव, न पुनर्गुणमात्रादेव केवलात् संभवविकलात्, 'श्रेयस्त्वसिद्धेः' सर्वप्रयोजनानां श्रेयोभावनिष्पत्तेः, इदमुक्तं भवति—गुणमात्रे सत्यपि यावदद्यापि प्रव्राज्यादिर्जीवो विवक्षितकार्यं प्रति योग्यतां न लभते न तावत्तेनारब्धमपि सिध्यति, अनधिकारित्वात्तस्य, अनधिकारिणश्च सर्वत्र कार्ये प्रतिषिद्धत्वात्, अतो योग्यतैव सर्वकार्याणां श्रेयोभावसंपादिकेति ॥ १३ ॥

यत्किञ्चिदेतदिति नारद इति ॥ १४ ॥ (२४०)

यत्किञ्चित् न किंचिदित्यर्थः एतत्सम्राडुक्तमिति नारदो वक्ति ॥ १४ ॥ कुत इत्याह—

गुणमात्राद् गुणान्तरभावेऽप्युत्कर्षायोगादिति ॥ १५ ॥ (२४१)

गुणमात्रात्—योग्यतामात्ररूपात् गुणान्तरस्य तथाविधस्य भावेऽप्युत्कर्षायोगात्—उत्कृष्टानां गुणानामसंभवात्, अन्यथा योग्यतामात्रस्य प्रायेण सर्वप्राणिनां संभवादुत्कृष्टगुणप्रसङ्गेन न कश्चित् सामान्यगुणः स्यात्, अतो विशिष्टैव योग्यता गुणोत्कर्षसाधिकेति सिद्धमिति ॥ १५ ॥

सोऽप्येवमेव भवतीति वसुरिति ॥ १६ ॥ (२४२)

निर्गुणस्य कथञ्चित्तद्गुणभावोपपत्तेरिति ॥ ९ ॥ २३५ ॥

निर्गुणस्य सतो जीवस्य कथञ्चित्-केनापि प्रकारेण स्वगतयोग्यताविशेषलक्षणेन प्रथमं 'तद्गुणभावोपपत्तेः' तेषां-समग्राणां प्रव्राज्यगुणानां प्रव्राजकगुणानां वा भावोपपत्तेः-घटनासंभवात्, तथाहि-यथा निर्गुणोऽपि सन् जन्तुर्विशिष्टकार्यहेतून् प्रथमं गुणान् लभते तथा यदि तद्गुणाभावेऽपि कथञ्चिद्विशिष्टमेव कार्यं लप्स्यते तदा को नाम विरोधः स्यात्?, दृश्यते च दरिद्रस्यापि कस्यचिदकस्मादेव राज्यादिविभूतिलाभ इति ॥ ९ ॥

अकारणमेतदिति व्यास इति ॥ १० ॥ (२३६)

'अकारणम्' अप्रयोजकं निष्फलमित्यर्थः 'एतद्' वाल्मीकिनिरूपितं वाक्यं इत्येतद् ब्रूते 'व्यासः' कृष्णद्वैपायनः ॥१०॥ कुत इत्याह—

गुणमात्रासिद्धौ गुणान्तरभाव(स्य)नियमा(द्)भावादिति ॥ ११ ॥ (२३७)

'गुणमात्रस्य' स्वाभाविकस्य तुच्छस्यापि गुणस्य प्रथममसिद्धौ सत्यां गुणान्तरस्य-अन्यस्य गुणविशेषस्य भावः-उत्पादः गुणान्तरभावः तस्य नियमाद्-अवश्यंतया अभावाद्-असत्त्वात्, स्वानुरूपकारणपूर्वको हि कार्यव्यवहारः, यतः पठ्यते-'नाकारणं भवेत्कार्यं, नान्यकारणकारणम् । अन्यथा न व्यवस्था स्यात्कार्यकारणयोः क्वचित् ॥ १४६ ॥" 'नान्यकारणकारण' मिति न-नैव अन्यस्य-आत्मव्यतिरिक्तस्य कारणमन्यकारणं अन्यकारणं कारणं यस्य तत् तथा, पटादेः कारणं सूत्रपिण्डादिर्घटादेः कारणं न भवति इति भावः ॥ ११ ॥

अत्र षोडश प्रव्रज्यार्हगुणाः, पञ्चदश पुनर्गुरुगुणा निरूपिता इति ॥ ४ ॥ उत्सर्गपक्षश्चायम्, अथात्रैवापवादमाह—

पादार्द्धगुणहीनौ मध्यमावराविति ॥ ५ ॥ (२३१)

पादेन-चतुर्थभागेन अर्द्धेन च-प्रतीतरूपेण प्रस्तुतगुणानां हीनौ-न्यूनौ प्रव्राज्यप्रव्राजकौ 'मध्यमावरौ' मध्यमजघन्यौ क्रमेण योग्यौ स्यातामिति ॥५॥ अथैतस्मिन्नेवार्थे परतीर्थिकमतानि दश स्वमतं चोपदर्शयितुमिच्छुः 'नियम एवायमिति वायु'रित्यादिकं 'भवन्ति अ(त्व)ल्पा अपि असाधारणगुणाः कल्याणोत्कर्षसाधका' इत्येतत्पर्यन्तं सूत्रकदम्बकमाह—

नियम एवायमिति वायुरिति ॥ ६ ॥ (२३२)

'नियम एव' अवश्यंभाव एव 'अयं' यदुत परिपूर्णगुणो योग्यो नापरः—पादप्रमाणादिहीनगुणः स्यादित्येवं 'वायुः'—वायुनामा प्रवादिविशेषः, प्राहेति सर्वत्र क्रिया गम्यते ॥ ६ ॥ कुत इत्याह—

समग्रगुणसाध्यस्य तदर्द्धभावेऽपि तत्सिद्ध्यसंभवादिति ॥ ७ ॥ (२३३)

'समग्रगुणसाध्यस्य' कारणरूपसमस्तगुणनिष्पाद्यस्य कार्यस्य 'तदर्द्धभावेऽपि' तेषां—गुणानामर्द्धभावे उपलक्षणत्वात् पादहीनभावे च 'तत्सिद्ध्यसंभवात्' तस्माद्—गुणार्द्धात् पादोनगुणमात्राद्वा या सिद्धिः—निष्पत्तिः तस्या असंभवाद्-अघटनात्, अन्यथा कार्यकारणव्यवस्थोपरमः प्रसज्यत इति ॥ ७ ॥

नैतदेवमिति वाल्मीकिरिति ॥ ८ ॥ (२३४)

'न' नैव 'एतत्' वायूक्तमिति, एतत् प्राह 'वाल्मीकिः' वल्मीकोद्भवः ऋषिविशेषः ॥८॥ कुत इत्याह—

मागक्रमाधिगतदीक्षः 'समुपासितगुरुकुलः' विधिवदाराधितगुरुपरिवारभावः 'अस्खलितशीलः' प्रव्रज्याप्रतिपत्तिप्रभृत्येवाखण्डितव्रतः 'सम्यगधीतागमः' सूत्रार्थोभयज्ञानक्रियादिगुणभाजो गुरोरासेवनेनाधिगतपारगतगदितागमरहस्यः, यतः पठ्यते–"तित्थे सुत्तत्थाणं गहणं विहिणा उ तत्थ तित्थमिदं। उभयन्नू चेव गुरू विही उ विणयाइओ चित्तो ॥११४॥ उभयन्नूविय किरियापरो दढं पवयणाणुरागी य। ससमयपरूवगो परिणओ य पन्नो य अच्चत्थं ॥ १४५ ॥" (उपदेशपदे ८५२–८५३) [तीर्थे सूत्रार्थयोर्ग्रहणं विधिनैव तत्र तीर्थमिदम्। उभयज्ञ एव गुरुः विधिस्तु विनयादिकश्चित्रः ॥ १ ॥ उभयज्ञोऽपि च क्रियापरो दृढं प्रवचनानुरागी च। स्वसमयप्ररूपकः परिणतश्च प्राज्ञश्चात्यर्थम् ॥ २ ॥] 'तत एव विमलतरबोधात्तत्त्ववेदी' तत एव-सम्यगधीतागमत्वादेव हेतोर्यो विमलतरो बोधः–शेषान् सम्यगधीतागमानपेक्ष्य स्फुटतरप्रज्ञोन्मीलः तस्मात्सकाशात् तत्त्ववेदी-जीवादिवस्तुविज्ञाता, 'उपशान्तः'–मनोवाक्कायविकारविकलः, 'प्रवचनवत्सलः'– यथानुरूपं साधुसाध्वीश्रावकश्राविकारूपचतुर्वर्णश्रमणसङ्घवात्सल्यविधायी, 'सत्त्वहितरतः' तत्तच्चित्रोपायोपादानेन सामान्येन सर्वसत्त्वप्रियकरणपरायणः, 'आदेयः'–परेषां ग्राह्यवचनचेष्टः, 'अनुवर्त्तकः'–चित्रस्वभावानां प्राणिनां गुणान्तराधानधियाऽनुवृत्तिशीलः 'गम्भीरः'–रोषतोषाद्यवस्थायामप्यलब्धमध्यः 'अविषादी'–न परीषहाद्यभिभूतः कायसंरक्षणादौ दैन्यमुपयाति 'उपशमलब्ध्यादिसंपन्नः' उपशमलब्धिः–परमुपशमयितुं सामर्थ्यलक्षणा, आदिशब्दादुपकरणलब्धिः स्थिरहस्तलब्धिश्च गृह्यते, ततस्ताभिः संपन्नः–समन्वितः, 'प्रवचनार्थवक्ता' यथावस्थितागमार्थप्रज्ञापकः 'स्वगुर्वनुज्ञातगुरुपदः' स्वगुरुणा–स्वगच्छनायकेनानुज्ञातगुरुपदः–समारोपिताचार्यपदवीकः, चकारो विशेषणसमुच्चये, इतिशब्दो गुरुगुणेयत्तासूचकः।



॥५९॥

अर्हः-योग्यः प्रव्रज्यार्हो जीवः, कीदृशः इत्याह—'आर्यदेशोत्पन्नः' मगधाद्यर्द्धषड्विंशतिमण्डलमध्यलब्धजन्मा, तथा 'विशिष्टजातिकुलान्वितः' विशुद्धवैवाह्यचतुर्वर्णान्तर्गतमातृपितृपक्षरूपजातिकुलसंपन्नः, तथा 'क्षीणप्रायकर्ममलः' क्षीणप्रायः—उत्सन्नप्रायः कर्ममलो—ज्ञानावरणमोहनीयादिरूपो यस्य सः तथा, तत एव विमलबुद्धिः, यत एव क्षीणप्रायकर्ममलः तत एव हेतोर्विमलबुद्धिः—निर्मलीमसमतिः, 'प्रतिक्षणं मरण'मिति समयप्रसिद्धावीचिमरणापेक्षयेति, पठ्यते च—"यामेव रात्रिं प्रथमामुपैति, गर्भे वसत्यै नरवीर! लोकः। ततः प्रभृत्यस्खलितप्रयाणः, स प्रत्यहं मृत्युसमीपमेति ॥ १४३ ॥" नरवीर इति व्यासेन युधिष्ठिरस्य संबोधनमिति, दारुणो विपाको मरणस्यैवेति गम्यते, सर्वाभावकारित्वात्तस्येति, 'प्रागपि' इति प्रव्रज्याप्रतिपत्तिपूर्वकाल एवेति, 'स्थिर' इति प्रारब्धकार्यस्यापान्तराल एव न परित्यागकारी, 'समुपसंपन्न' इति समिति—सम्यग्वृत्त्या सर्वथाऽऽत्मसमर्पणरूपया उपसंपन्नः—सामीप्यमागत इति ॥३॥ इत्थं प्रव्रज्यार्हमभिधाय प्रव्राजकमाह—

गुरुपदार्हस्तु इत्थंभूत एव—विधिप्रतिपन्नप्रव्रज्यः १ समुपासितगुरुकुलः २ अस्खलितशीलः ३ सम्यगधीतागमः ४ तत एव विमलतरबोधात्तत्त्ववेदी ५ उपशान्तः ६ प्रवचनवत्सलः ७ सत्त्वहितरतः ८ आदेयः ९ अनुवर्त्तकः १० गम्भीरः ११ अविषादी १२ उपशमलब्ध्यादिसंपन्नः १३ प्रवचनार्थवक्ता १४ स्वगुर्वनुज्ञातगुरुपद १५ श्चेतीति ॥ ४ ॥ (२३०)

'गुरुपदार्हः' प्रवाचकपदयोग्यः तुः पूर्वस्माद्विशेषणार्थः 'इत्थंभूत एव' प्रव्रज्यार्हगुणयुक्त एव सन्, न पुनरन्यादृशोऽपि, तस्य स्वयं निर्गुणत्वेन प्रव्राज्यजीवगुणबीजनिक्षेपकरणायोगात्, किमित्याह—'विधिप्रतिपन्नप्रव्रज्यः' वक्ष्य-

नापि कालेन 'प्रत्याख्यानम्' आश्रवद्वारनिरोधलक्षणं 'ज्ञात्वा' गुरुमूले श्रुतधर्मतया सम्यगवबुध्य प्रत्याख्यानस्य फलं हेतुं
च 'सुबह्वपि' सर्वपापस्थानविषयतया भूयिष्ठमपि करोतीति गम्यते, स्तोकं तावदनुष्ठानं संपन्नमेवेत्यपिशब्दार्थः, अयमभि-
प्रायः-स्तोकादप्यनुष्ठानादत्यन्तविशुद्धात् सकाशात् कालेन प्रत्याख्यानस्वरूपादिज्ञातुर्भूयिष्ठमपि प्रत्याख्यानं संपद्यत इति॥३॥

इति विशेषतो गृहस्थधर्म उक्तः, साम्प्रतं यतिधर्मावसर इति यतिमनुवर्णयिष्याम इति ॥ १ ॥ (२२७)

प्रतीतार्थमेव ॥ १ ॥ यत्यनुवर्णनमेवाह—

अर्हः अर्हसमीपे विधिप्रव्रजितो यतिरिति ॥ २ ॥ (२२८)

'अर्हः' प्रव्रज्यार्हो वक्ष्यमाण एव अर्हस्य-प्रव्रज्यादानयोग्यस्य वक्ष्यमाणगुणस्यैव गुरोः समीपे-पार्श्वे विधिना-वक्ष्य-
माणेनैव 'प्रव्रजितः' गृहीतदीक्षः 'यतिः' मुनिरित्युच्यते इति ॥२॥ 'यथोद्देशं निर्देश' इति न्यायात्प्रव्रज्यार्हमेवाभिधित्सुराह-

अथ प्रव्रज्यार्हः—आर्यदेशोत्पन्नः १ विशिष्टजातिकुलान्वितः २ क्षीणप्रायकर्ममलः ३ तत एव विम-
लबुद्धिः ४ दुर्लभं मानुष्यं जन्म मरणनिमित्तं, संपदश्चपलाः, विषया दुःखहेतवः, संयोगे वियोगः, प्रतिक्षणं
मरणं; दारुणो विपाकः इत्यवगतसंसारनैर्गुण्यः ५ तत एव तद्विरक्तः, ६ प्रतनुकषायः ७ अल्पहास्यादिः ८ कृतज्ञः
९ विनीतः १० प्रागपि राजामात्यपौरजनबहुमतः ११ अद्रोहकारी १२ कल्याणांगः १३ श्राद्धः १४ स्थिरः
१५ समुपसंपन्न १६ श्चेति ॥ ३ ॥ (२२९)

एतत्सर्वं सुगमं, परं 'अथे'त्यानन्तर्यार्थः प्रव्रजनं-पापेभ्यः प्रकर्षेण शुद्धचरणयोगेषु व्रजनं-गमनं प्रव्रज्या तस्या

'एवम्' उक्तरूपेण विधिना—सामान्यतो विशेषतश्च गृहस्थधर्मलक्षणेन समायुक्तः—संपन्नः 'सेवमानः' अनुशीलयन् 'गृहाश्रमं' गृहवासं, किमित्याह—'चारित्रमोहनीयेन' प्रतीतरूपेण, 'मुच्यते' परित्यज्यते 'पापकर्मणा' पापकृत्यात्मकेन ॥ १ ॥ एतदपि कथमित्याह—

सदाज्ञाऽऽराधनायोगाद्भावशुद्धेर्नियोगतः । उपायसंप्रवृत्तेश्च, सम्यक्चारित्ररागतः ॥ २० ॥

सन्—अकलङ्कितो य आज्ञाराधनयोगो—यतिधर्माभ्यासासहेनादौ श्रावकधर्मः अभ्यसनीय इत्येवंलक्षणो जिनोपदेशसंबन्धः तस्माद् यका भावशुद्धिः—मनोनिर्मलता तस्याः 'नियोगतः' अवश्यतया तथा 'उपायसंप्रवृत्तेश्च' उपायेन शुद्धहेत्वङ्गीकरणरूपेण प्रवृत्तेः—चेष्टनात्, चकारो हेत्वन्तरसमुच्चये, इयमपि कुत इत्याह—'सम्यक्चारित्ररागतः' निर्व्याजचारित्राभिलाषात्, इदमुक्तं भवति—सदाज्ञाराधनायोगात् यका भावशुद्धिः या च सम्यक्चारित्ररागतः उपायसंप्रवृत्तिः अणुव्रतादिपालनरूपा ताभ्यामुभाभ्यामपि हेतुभ्यां चारित्रमोहनीयेन मुच्यते, न पुनरन्यथेति ॥ २ ॥ आह इदमपि कथं सिद्धं यथेत्थं चारित्रमोहनीयेन मुच्यते ततः परिपूर्णप्रत्याख्यानभाग्भवतीत्याशङ्क्याह—

विशुद्धं सदनुष्ठानं, स्तोकमप्यर्हतां मतम् । तत्त्वेन तेन च प्रत्याख्यानं ज्ञात्वा सुबह्वपि ॥ २१ ॥

'विशुद्धं' निरतिचारं अत एव सत्—सुन्दरं अनुष्ठानं स्थूलप्राणातिपातविरमणादि 'स्तोकमपि' अन्यतमैकभङ्गकप्रतिपत्त्या अल्पं, बहु तावन्मतमेवेत्यपिशब्दार्थः, 'अर्हतां' पारगतानां 'मतम्' अभीष्टं, कथमित्याह—'तत्त्वेन' तात्त्विकरूपतया, न पुनरतिचारकालुष्यदूषितं बह्वप्यनुष्ठानं सुन्दरं मतं, 'तेन च' तेन पुनर्विशुद्धेनानुष्ठानेन करणभूतेन स्तोके-

पर्वतं ' सर्वविरतिमहाशैलमिति ॥२॥ ननु एतदपि कथमित्थमित्याह—

स्तोकान् गुणान् समाराध्य, बहूनामपि जायते । यस्मादाराधनायोग्यस्तस्मादादावयं मतः ॥ १८ ॥ इति॥

'स्तोकान्' तुच्छान् 'गुणान्' श्रमणोपासकावस्थोचितान् 'समाराध्य' पालयित्वा 'बहूनां' सुश्रमणोचितगुणानां, स्तोकानामाराधनायोग्यो जात एवेत्यपिशब्दार्थः, 'जायते' भवति यस्मात्कारणादाराधनायोग्यः—परिपालनोचितः, अविकलाल्पगुणाराधनावलम्बलीनबहुगुणलाभवाधकर्मकलङ्कत्वेन तद्गुणलाभसामर्थ्यभावात्, तस्मात्कारणादादौ-प्रथमत एव 'अयम्' अनन्तरमोक्तो गृहस्थधर्मो 'मतः' सुधियां संमत इति । पुरुषविशेषापेक्षोऽयं न्यायः, अन्यथा तथाविधाध्यवसायसामर्थ्यादत एवावलीभूतचारित्रमोहानां स्थूलभद्रादीनामेतत्क्रममन्तरेणापि परिशुद्धसर्वविरतिलाभस्य शास्त्रेषु श्रूयमाणत्वात् ॥ इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ विशेषतो गृहस्थधर्मविधिस्तृतीयोऽध्यायः समाप्तः ।

व्याख्यातस्तृतीयोऽध्यायः ।

## अथ चतुर्थः अध्यायः

साम्प्रतं चतुर्थ आरभ्यते, तस्य चेदमादिसूत्रम्—

एवं विधिसमायुक्तः, सेवमानो गृहाश्रमम् । चारित्रमोहनीयेन, मुच्यते पापकर्मणा ॥ १९ ॥

‘ यथोचितं ’ यो यदा वर्द्धयितुमुचितस्तस्य सम्यग्दर्शनादेर्गुणस्य दर्शनप्रतिमाव्रतप्रतिमाभ्यासद्वारेण वृद्धिः—पुष्टीकरणं कार्या ॥ ९२ ॥

तथा–सत्त्वादिषु मैत्र्यादियोग इतीति ॥ ९३ ॥ (२२६)

सत्त्वेषु—सामान्यतः सर्वजन्तुषु आदिशब्दाद्दुःखितसुखदोषदूषितेषु मैत्र्यादीनाम्-आशयविशेषाणां योगो-व्यापारः कार्यः, मैत्र्यादिलक्षणं चेदम्—“ परहितचिन्ता मैत्री, परदुःखविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता, परदोषोपेक्षणमुपेक्षा ॥ १४२ ॥ ” ( षोड० ) इतिः परिसमाप्तौ ॥ संप्रत्युपसंहरन्नाह—

विशेषतो गृहस्थस्य, धर्म उक्तो जिनोत्तमैः । एवं सद्भावनासारः, परं चारित्रकारणम् ॥ १६ ॥

‘ विशेषतः ’ सामान्यगृहस्थधर्मवैलक्षण्येन ‘ गृहस्थस्य ’ गृहमेधिनो धर्मः ‘ उक्तो ’ निरूपितो ‘ जिनोत्तमैः ’ अर्हद्भिः ‘ एवम् ’—उक्तरीत्या ‘ सद्भावनासारः ’ परमपुरुषार्थानुकूलभावनाप्रधानः, भावश्रावकधर्म इत्यर्थः, कीदृशोऽसावित्याह-‘परम्’ अवन्ध्यमिह भवान्तरे वा ‘चारित्रकारणं’-सर्वविरतिहेतुः ॥१॥ ननु कथं परं चारित्रकारणमसावित्याशङ्क्याह-

पदंपदेन मेधावी, यथाऽऽरोहति पर्वतम् । सम्यक् तथैव नियमाद्धीरश्चारित्रपर्वतम् ॥ १७ ॥

इह पदं पदिकोच्यते, ततः पदेन पदेन यदारोहणं तन्निपातनात् पदंपदेनेत्युच्यते, ततः पदंपदेन ‘ मेधावी ’ बुद्धिमान् ‘ यथे ’ति दृष्टान्तार्थः ‘ आरोहति ’ आक्रामति ‘ पर्वतम् ’ उज्जयन्तादिकं ‘ सम्यक् ’ हस्तपादादिशरीरावयवभङ्गाभावेन ‘ तथैव ’ तेनैव प्रकारेण ‘ नियमाद् ’ अवश्यतया ‘ धीरो ’ निष्कलङ्कानुपालितश्रमणोपासकसमाचारः ‘ चारित्र-

तदनु तन्नैर्गुण्यभावनेति ॥ ८९ ॥ (२२२)

तस्या–भवस्थितेः नैर्गुण्यभावना–निःसारत्वचिन्तनं, यथा–" इतः क्रोधो गृध्रः प्रकटयति पक्षं निजमितः शृगाली तृष्णेयं विवृतवदना धावति पुरः । इतः क्रूरः कामो विचरति पिशाचश्चिरमहो, श्मशानं संसारः क इह पतितः स्थास्यति सुखम् ? ॥ १३७ ॥ एतास्तावदसंशयं कुशदलप्रान्तोदबिन्दूपमा, लक्ष्म्यो बन्धुसमागमोऽपि न चिरस्थायी खलमीतिवत् । यच्चान्यत्किल किञ्चिदस्ति निखिलं तच्छारदाम्भोधरच्छायावच्चलतां बिभर्त्ति यदतः स्वस्मै हितं चिन्त्यताम् ॥१३८॥ "८९॥

तथा–अपवर्गालोचनमिति ॥ ९० ॥ (२२३)

अपवर्गस्य–मुक्तेः आलोचनं–सर्वगुणमयत्वेनोपादेयतया परिभावनम्, यथा–" प्राप्ताः श्रियः सकलकामदुघास्ततः किं ?, दत्तं पदं शिरसि विद्विषतां ततः किम् ?। संपूरिताः प्रणयिनो विभवैस्ततः किं ?, कल्पं भृतं तनुभृतां तनुभिस्ततः किम् ? ॥ १३९ ॥ तस्मादनन्तमजरं परमं प्रकाशं, तच्चित्त ! चिन्तय किमेभिरसद्विकल्पैः ? । यस्यानुषङ्गिण इमे भुवनाधिपत्य-योगादयः कृपणजन्तुमतां भवन्ति ॥ १४० ॥ " ॥ ९० ॥

तथा–श्रामण्यानुराग इति ॥ ९१ ॥ (२२४)

श्रामण्ये–शुद्धसाधुभावे अनुरागो विधेयः, यथा–" जैनं मुनिव्रतमशेषभवान्तकर्मसंतानतानवकरं स्वयमभ्युपेतः । कुर्यां तदुत्तरतरं च तपः कदाऽहं, भोगेषु निःस्पृहतया परिमुक्तसङ्गः ? ॥ १४१ ॥ " ॥ ९१ ॥

तथा–यथोचितं गुणवृद्धिरिति ॥ ९२ ॥ (२२५)



अल्पता

तथा-योगाभ्यास इति ॥ ८५ ॥ (२१८)

योगस्य-सालम्बननिरालम्बनभेदभिन्नस्याभ्यासः-पुनः पुनरनुशीलनम्, उक्तं च—" सालम्बनो निरालम्बनश्च योगः परो द्विधा ज्ञेयः । जिनरूपध्यानं खल्वाद्यस्तत्तत्त्वगस्त्वपरः ॥ १३३ ॥" ( षोड० ) 'तत्तत्त्वग' इति निर्वृत्तजिनस्वरूपप्रतिबद्ध इति ॥ ८५ ॥

तथा-नमस्कारादिचिन्तनमिति ॥ ८६ ॥ (२१९)

नमस्कारस्य आदिशब्दात्तदन्यस्वाध्यायस्य च चिन्तनं-भावनम् ॥ ८६ ॥

तथा-प्रशस्तभावक्रियेति ॥ ८७ ॥ (२२०)

तथा यथा क्रोधादिदोषविपाकपर्यालोचनेन प्रशस्तस्य-प्रशंसनीयस्य भावस्य-अन्तःकरणरूपस्य क्रिया-करणं, अन्यथा महादोषभावात्, यदुच्यते-" चित्तरत्नमसंक्लिष्टमान्तरं धनमुच्यते । यस्य तन्मुषितं दोषैस्तस्य शिष्टा विपत्तयः ॥ १३४ ॥" ( ह० अष्टके ) ॥ ८७ ॥

तथा-भवस्थितिप्रेक्षणमिति ॥ ८८ ॥ (२२१)

भवस्थितेः-संसाररूपस्य प्रेक्षणम्-अवलोकनम्-यथा-" यौवनं नगनदीस्पदोपमं, शारदाम्बुदविलासि जीवितम्। स्वप्नलब्धधनविभ्रमं धनं, स्थावरं किमपि नास्ति तत्त्वतः ॥ १३५ ॥ विग्रहा गदभुजङ्गमालयाः, संगमा विगमदोषदूषिताः । संपदोऽपि विपदा कटाक्षिता, नास्ति किञ्चिदनुपद्रवं स्फुटम् ॥ १३६ ॥ " इत्यादीति ॥ ८८ ॥

रेत् " ॥ १३२ ॥ इत्यादिशुभचिन्तारूपायां ' प्रबन्धः ' प्रकर्षप्रवृत्तिः ॥ ७९ ॥

तथा–शिष्टचरितश्रवणमिति ॥ ८० ॥ (२१३)

शिष्टचरितानां–' शिष्टचरितप्रशंसे 'ति प्रथमाध्यायसूत्रोक्तलक्षणानां श्रवणं–निरन्तरमाकर्णनं, तच्छ्रवणे हि तद्गताभिलाषभावान्न कदाचिद् लब्धगुणहानिः संपद्यत इति ॥ ८० ॥

तथा–सान्ध्यविधिपालनेति ॥ ८१ ॥ (२१४)

सान्ध्यस्य–सन्ध्याकालभवस्य विधेः–अनुष्ठानविशेषस्य दिनाष्टमभागभोजनाभ्यवहारसंकोचादिलक्षणस्य पालना–अनुसेवनमिति ॥ ८१ ॥ एनामेव विशेषत आह—

यथोचितं तत्प्रतिपत्तिरिति ॥ ८२ ॥ (२१५)

' यथोचितं ' यथासामर्थ्यं ' तत्प्रतिपत्तिः ' सान्ध्यप्रतिपत्तिरिति ॥ ८२ ॥ कीदृशीत्याह–

पूजापुरस्सरं चैत्यादिवन्दनमिति ॥ ८३ ॥ (२१६)

तत्कालोचितपूजापूर्वकं चैत्यवन्दनं, गृहचैत्यचैत्यभवनयोः, आदिशब्दाद्यतिवन्दनं मातापितृवन्दनं च ॥ ८३ ॥

तथा–साधुविश्रामणक्रियेति ॥ ८४ ॥ (२१७)

साधूनां–निर्वाणाराधनयोगसाधनप्रवृत्तानां पुरुषाणां स्वाध्यायध्यानाद्यनुष्ठाननिष्ठोपहितश्रमाणां तथाविधविश्रामकसाध्वभावे विश्रामणक्रिया, विश्राम्यतां–विश्रामं लभमानानां करणं विश्रामणा सा चासौ क्रिया चेति समासः ॥ ८४ ॥

प्राप्ते भोजनकाले चैत्यानाम्–अर्हद्बिम्बलक्षणानां आदिशब्दात्साधुसाधर्मिकाणां च पूजा–पुष्पधूपादिभिरन्नपानप्रदानादिभिश्चोपचरणं सा पुरःसरा यत्र तच्चैत्यादिपूजापुरःसरं भोजनम्–अन्नोपजीवनं, यतोऽन्यत्रापि पठ्यते–" जिणपूओचियदाणं परियणसंभालणा उचियकिच्चं। ठाणुववेसो य तहा पच्चक्खाणस्स संभरणं ॥ १३० ॥" [ जिनपूजोचितदानं परिजनस्मरणं उचितकृत्यम्। स्थानोपवेशनं च तथा प्रत्याख्यानस्य संस्मृतिः ॥ १ ॥ ] ॥ ७५ ॥

तथा–तदन्वेव प्रत्याख्यानक्रियेति ॥ ७६ ॥ (२०९)

'तदन्वेव' भोजनानन्तरमेव प्रत्याख्यानक्रिया–द्विविधाद्याहारसंवरणरूपा ॥ ७६ ॥

तथा–शरीरस्थितौ प्रयत्न इति ॥ ७७ ॥ (२१०)

'शरीरस्थितौ' उचिताभ्यङ्गसंवाहनस्नानादिलक्षणायां यत्नः–आदरः, तथा च पठ्यते–" धर्मार्थकाममोक्षाणां, शरीरं कारणं यतः। ततो यत्नेन तद्रक्ष्यं, यथोक्तैरनुवर्त्तनैः ॥ १३१ ॥" इति ७७ ॥

तथा–तदुत्तरकार्यचिन्तेति ॥ ७८ ॥ (२११)

तस्याः–शरीरस्थितेरुत्तराणि–उत्तरकालभावीनि यानि कार्याणि–व्यवहारकरणादीनि तेषां चिन्ता–तन्निरूपा कार्या इति ॥ ७८ ॥

तथा–कुशलभावनायां प्रबन्ध इति ॥ ७९ ॥ (२१२)

'कुशलभावनायाम्' " सर्वेऽपि सन्तु सुखिनः, सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु, मा कश्चित्पापमाच-

# पञ्चमः अध्यायः

व्याख्यातश्चतुर्थोऽध्यायः, अथ पञ्चमो व्याख्यायते, तस्य चेदमादिसूत्रम्—

यतित्वं दुष्करं तद्वदित्याहुस्तत्त्ववेदिनः ॥ २५ ॥

बाहुभ्यां दुस्तरो यद्वत्, क्रूरनक्रो महोदधिः । यतित्वं दुष्करं तद्वदित्याहुस्तत्त्ववेदिनः ॥ २५ ॥

'बाहुभ्यां'-भुजाभ्यां, 'दुस्तरः'-कृच्छ्रेण तरीतुं शक्यः 'यद्वदि'ति दृष्टान्तार्थः 'क्रूरनक्रः'-क्रूरा-भीषणा नक्रा-जल-जन्तुविशेषा उपलक्षणत्वात् मत्स्यमकरशुंसुमारादयश्च यत्र स तथा 'महोदधिः'-महासमुद्रः 'यतित्वं'-श्रामण्यं 'दुष्करं'-दुरनुष्ठेयं तद्वदिति दार्ष्टान्तिकार्थः, इत्येतदाहुः-'तत्त्ववेदिनः'-प्रव्रज्यापरमार्थज्ञातार इति ॥ १ ॥ अस्यैव दुष्करत्वे हेतुमाह—

अपवर्गः फलं यस्य, जन्ममृत्यादिवर्जितः । परमानन्दरूपश्च, दुष्करं तन्न चाद्भुतम् ॥ २६ ॥

'अपवर्गः'-मोक्षः, 'फलं'-कार्यं 'यस्य'-यतित्वस्य 'जन्ममृत्यादिवर्जितः' जन्ममरणजरादिसंसारविकार-विरहितः, तथा 'परमानन्दरूपः' सर्वोपमातीतानन्दस्वभावः, चकारो विशेषणसमुच्चये, 'दुष्करं' कृच्छ्रेण कर्तुं शक्यं 'तत्' यतित्वं, 'न च' नैवाद्भुतम्- आश्चर्यमेतत्, अत्यन्तमहोदयानां विद्यामन्त्रौषधादिसाधनानामिहैव दुष्करत्वोपलम्भात् इति ॥ २ ॥ एवं तर्हि कथमतिदुष्करं यतित्वं कर्तुं शक्यं स्यादित्याशङ्क्याह—

भवस्वरूपविज्ञानात्तद्विरागाच्च तत्त्वतः । अपवर्गानुरागाच्च, स्यादेतन्नान्यथा क्वचित् ॥ २७ ॥

'भवस्वरूपस्य'-इन्द्रजालमृगतृष्णिकागन्धर्वनगरस्वप्नादिकल्पस्य विज्ञानात्-सम्यक्श्रुतलोचनेन अवलोकनात् प्राक्,

'उपायतः'—उपायेन निरवद्यानुष्ठानाभ्यासरूपेण कायानां—पृथिव्यादीनां पालनं—रक्षणं प्रविव्रजिषुः प्राणी कार्यत इति ॥ ३६ ॥

तथा—भाववृद्धिकरणमिति ॥ ३७ ॥ (२६३)

भावस्य—प्रव्रज्याभिलापलक्षणस्य वृद्धिः—उत्कर्षः तस्याः तैस्तैः प्रव्रज्याफलप्ररूपणादिलक्षणैर्वचनैः करणं—सम्पादनं तस्य ॥ ३७ ॥

तथा—अनन्तरानुष्ठानोपदेश इति ॥ ३८ ॥ (२६४)

अनन्तरानुष्ठानस्य—प्रव्रज्याग्रहणानन्तरमेव करणीयस्य 'गुर्वन्तेवासितातद्भक्तिबहुमानादेः' अनन्तराध्याये एव वक्ष्यमाणस्योपदेशः तस्य कार्यः ॥ ३८ ॥

तथा—शक्तितस्त्यागतपसी इति ॥ ३९ ॥ (२६५)

शक्तितः—शक्तिमपेक्ष्य त्यागं च—अर्थव्ययलक्षणं देवगुरुसङ्घपूजादौ विषये तपश्च—अनशनादि कारणीयः स इति ॥ ३९ ॥

तथा—क्षेत्रादिशुद्धौ वन्दनादिशुद्ध्या शीलारोपणमिति ॥ ४० ॥ (२६६)

क्षेत्रस्य—भूमिभागलक्षणस्य आदिशब्दाद्दिशश्च शुद्धौ सत्यां 'वन्दनादिशुद्ध्या' चैत्यवन्दनकायोत्सर्गकारणसाधुनेपथ्यसमर्पणादिसमाचारचारुतारूपया शीलस्य-सामायिकपरिणामरूपस्य 'करेमि भंते! सामायिकं' इत्यादिदण्डकोच्चारणपूर्वकमारोपणं—प्रव्रज्यार्हे न्यसनं गुरुणा कार्यमिति, तत्र क्षेत्रशुद्धिः इक्षुवनादिरूपा, यथोक्तम्—"उच्छुवणे सालिवणे पउमसरे

तथा-अरक्तद्विष्टतेति ॥ १५ ॥ (२८४)

सर्वत्र प्रियकारिण्यरक्तेन-अरागवता तदितरस्मिँश्चाद्विष्टेन-अद्वेषवता भाव्यम्, यतः पठ्यते-
" रागद्वेषौ यदि स्यातां, तपसा किं प्रयोजनम्?। स्यातां चेद् रागद्वेषौ न, तपसा किं प्रयोजनम्? ॥१६०॥" १५॥

तथा-ग्लानादिप्रतिपत्तिरिति ॥ १६ ॥ (२८५)

ग्लानो-ज्वरादिरोगातुरः आदिशब्दाद्बालवृद्धबहुश्रुतप्राघूर्णकादिग्रहः, तेषां प्रतिपत्तिः-समुचितान्नपानादिसंपादनरूपं वैयावृत्त्यं, महाफलत्वात्तस्य, पठ्यते च-" पडिभग्गस्स मयस्स व नासइ चरणं सुअं अगुणणाए। नो वेयावच्चकयं सुहोदयं नासई कम्मं ॥ १६१ ॥" तथा-" जह भमरमहुअरिगणा निवयंति कुसुमियम्मि वणसंडे। इय होइ निवइयव्वं गेलण्णे कइयवजढेणं ॥ १६२ ॥ " [ प्रतिभग्नस्य मृतस्य वा नश्यति चरणं श्रुतमगणनया। न वैयावृत्यकृतं शुभोदयं नश्यति कर्म ॥ १ ॥ यथा भ्रमरमधुकरीगणा निपतन्ति कुसुमिते वनखण्डे। इति भवति निपतितव्यं ग्लानौ त्यक्तकैतवेन ॥ २ ॥ ] १६ ॥

तथा-परोद्वेगाहेतुतेति ॥ १७ ॥ (२८६)

परेषाम्-आत्मव्यतिरिक्तानां स्वपक्षगतानां परपक्षगतानां च गृहस्थपाषण्डिरूपाणामुद्वेगस्य-प्रतीतरूपस्याहेतुता-अहेतुभावः, यथोक्तम्-" धम्मत्थमुज्जएणं सव्वस्सापत्तियं न कायव्वं। इय संजमोऽवि सेओ एत्थ य भयवं उदाहरणं ॥१६३॥ सो तावसासमाओ तेसिं अप्पत्तियं मुणेऊणं। परमं अबोहिवीअं तओ गओ हंतऽकालेऽवि ॥ १६४ ॥ इय अन्नेणऽवि (सव्वेणवि) सम्मं सक्कं अप्पत्तियं सइ जणस्स। नियमा परिहरियव्वं इयरम्मि सतत्तचिंता उ ॥ १६५ ॥ "त्ति ( पञ्च १११४-

प्राणादिवियोगानां

नाऽपद्रावणानां च परिहार इति ॥ १० ॥

तथा–त्रिधेर्याशुद्धिः ॥ ११ ॥ (२८०)

त्रिधा–ऊर्ध्वाधस्तिर्यग्दिगपेक्षया ईर्यायाः–चङ्क्रमणस्य शुद्धिः–युगमात्रादिदृष्टिनिवेशरूपा ॥ ११ ॥

तथा–भिक्षाभोजनमिति ॥ १२ ॥ (२८१)

इह त्रिधा भिक्षा–सर्वसंपत्करी पौरुषघ्नी वृत्तिभिक्षा चेति, तल्लक्षणं चेदम्–" यतिर्ध्यानादियुक्तो यो, गुर्वाज्ञायां व्यवस्थितः । सदाऽनारम्भिणस्तस्य, सर्वसंपत्करी मता ॥ १५६ ॥ वृद्धाद्यर्थमसङ्गस्य, भ्रमरोपमयाऽटतः । गृहिदेहोपकाराय, विहितेति शुभाशयात् ॥ १५७ ॥ प्रव्रज्यां प्रतिपन्नो यस्तद्विरोधेन वर्त्तते । असदारम्भिणस्तस्य, पौरुषघ्नी प्रकीर्त्तिता ॥ १५८॥ निःस्वान्धपङ्गवो ये तु, न शक्ता वै क्रियान्तरे । भिक्षामटन्ति वृत्त्यर्थं, वृत्तिभिक्षेयमुच्यते ॥१५९॥ इति (ह॰ अष्टके) ततो भिक्षया–प्रस्तावात्सर्वसंपत्करीलक्षणया पिण्डमुत्पाद्य भोजनं विधेयमिति ॥ १२ ॥

तथा–आघाताद्यदृष्टिरिति ॥ १३ ॥ (२८२)

आघात्यन्ते–हिंस्यन्ते जीवा अस्मिन्निति आघातः–शूनादिस्थानं, आदिशब्दात् द्यूतखलाद्यशेषप्रमादस्थानग्रहः, ततः आघातादेरदृष्टिः–अनवलोकनं कार्यं, तदवलोकने हि अनादिभवाभ्यस्ततया प्रमादानां तत्कौतुकात् कोपादिदोषप्रसङ्गात् इति ॥

तथा–तत्कथाऽश्रवणमिति ॥ १४ ॥ (२८३)

तेषां–आघातादीनां कथायाः परैरपि कथ्यमानायाः अश्रवणम्–अनाकर्णनं, तच्छ्रवणेऽपि दोषः प्राग्वत् ॥ १४ ॥

तथा-सदाऽऽज्ञाकरणमिति ॥ ५ ॥ (२७४)

'सदा'-सर्वकालं अह्नि रात्रौ चेत्यर्थः आज्ञायाः-गुरूपदिष्टार्थस्वरूपायाः करणम् ॥ ६ ॥

तथा-विधिना प्रवृत्तिरिति ॥ ६ ॥ (२७५)

'विधिना' शास्त्रोक्तेन 'प्रवृत्तिः' प्रत्युपेक्षणाप्रमार्जनाभिक्षाचर्यादिषु साधुसमाचारेषु व्यापारणम् ॥ ६ ॥

तथा-आत्मानुग्रहचिन्तनमिति ॥ ७ ॥ (२७६)

क्वचिदर्थे गुर्वाज्ञायां आत्मानुग्रहस्य-उपकारस्य चिन्तनं-विमर्शनं, यथा-"धन्यस्योपरि निपतत्यहितसमाचरणधर्मनिर्वापी । गुरुवदनमलयनिसृतो वचनरसश्चन्दनस्पर्शः ॥ १५५ ॥" (प्रशम०, श्लो०७०)

तथा-व्रतपरिणामरक्षेति ॥ ८ ॥ (२७७)

व्रतपरिणामस्य-चारित्रलक्षणस्य तत्तदुपसर्गपरीषहादिषु स्वभावत एव व्रतबाधाविधायिषु सत्सु रक्षा-चिन्तामणिमहौषध्यादिरक्षणोदाहरणेन परिपालना विधेया ॥ ८ ॥

तथा-आरम्भत्याग इति ॥ ९ ॥ (२७८)

आरम्भस्य-षट्कायोपमर्दरूपस्य त्यागः ॥ ९ ॥ एतदुपायमेवाह-

पृथिव्याद्यसंघट्टनमिति ॥ १० ॥ (२७९)

पृथिव्यादीनां-जीवनिकायानां 'असंघट्टनं' संघट्टनं-स्पर्शनं तत्प्रतिषेधादसंघट्टनं, उपलक्षणत्वादगाढगाढपरिताप-

तदनु 'तद्विरागात्'-तप्तलोहपदन्यासोद्विजनन्यायेन भवस्वरूपोद्वेगात्, चकारो हेत्वन्तरसमुच्चये, 'तत्त्वतः' निर्व्याजवृत्त्या, तथा 'अपवर्गानुरागात्' परमपदस्पृहातिरेकात्, चशब्दः प्राग्वत्, स्याद्-भवेदेतद्-यतित्वं, 'नान्यथा' नान्यप्रकारेण 'क्वचित्' क्षेत्रे काले वा, सम्यगुपायमन्तरेणोपेयस्य कदाचिदभावादिति ॥ ३ ॥

इत्युक्तो यतिः,अधुनाऽस्य धर्ममनुवर्णयिष्यामः,यतिधर्मो द्विविधः-सापेक्षयतिधर्मो निरपेक्षयतिधर्मश्चेति १॥(२७०)

प्रतीतार्थमेव, परं गुरुगच्छादिसाहाय्यमपेक्षमाणो यः प्रव्रज्यां प्रतिपालयति स सापेक्षः, इतरस्तु निरपेक्षो यतिः, तयोर्धर्मोऽनुक्रमेण गच्छवासलक्षणो जिनकल्पादिलक्षणश्चेति ॥ १ ॥

तत्र सापेक्षयतिधर्म इति ॥ २ ॥ (२७१)

'तत्र' तयोः सापेक्षनिरपेक्षयतिधर्मयोर्मध्यात् सापेक्षयतिधर्मोऽयं भण्यते ॥ २ ॥

यथा-गुर्वन्तेवासितेति ॥ ३ ॥ (२७२)

गुरोः-प्रव्राजकाचार्यस्य 'अन्तेवासिता' शिष्यभावः यावज्जीवमनुष्ठेया, तच्छिष्यभावस्य महाफलत्वात्, पठ्यते च-"नाणस्स होइ भागी थिरयरओ दंसणे चरित्ते य । धण्णा आवकहाए गुरुकुलवासं न मुञ्चन्ति ॥ १५४ ॥" (वि. आव० ३४५९) [ ज्ञानस्य भवति भाजनं स्थिरतरो दर्शने चारित्रे च । धन्या यावत्कथं गुरुकुलवासं न मुञ्चन्ति ॥१॥ ]

तथा-तद्भक्तिबहुमानाविति ॥ ४ ॥ (२७३)

तस्मिन्-गुरौ भक्तिः-समुचितान्नपानादिनिवेदनपादप्रक्षालनादिरूपा बहुमानश्च-भावप्रतिबन्धः ॥ ५ ॥

तथा—असत्प्रलापाश्रुतिरिति ॥ २८॥ ( २९७ )

असतां—खलप्रकृतीनां प्रलापा—अनर्थकवचनरूपा असत्प्रलापाः तेषामश्रुतिः—अनवधारणं, श्रुतिकार्यद्वेषाकरणेन अनुग्रहचिन्तनेन च, यथोक्तम्—" निराकरिष्णुर्यदि नोपलभ्यते, भविष्यति क्षान्तिरनाश्रया कथम् ? । यदाश्रयात्क्षान्तिफलं मयाऽऽप्यते, स सत्कृतिं कर्म च नाम नार्हति ॥ १७३ ॥ " २८ ॥

तथा—अभिनिवेशत्याग इति ॥ २९ ॥ ( २९८ )

अभिनिवेशस्य—मिथ्याग्रहरूपतयाऽप्रज्ञापनीयतामूलबीजस्य सर्वकार्येषु त्याग इति ॥ २९ ॥

तथा—अनुचिताग्रहणमिति ॥ ३० ॥ ( २९९ )

अनुचितस्य—साधुजनाचारबाधाविधायितयाऽयोग्यस्य अशुद्धपिण्डशय्यावस्त्रादेर्धर्मोपकरणस्य बालवृद्धनपुंसकादेश्च प्रव्राजनीयस्य अग्रहणम्—अनुपादानं कार्यमिति, यथोक्तम्—"पिंडं सिज्जं च वत्थं च, चउत्थं पायमेव च। अकप्पियं न इच्छिज्जा, पडिगाहिज्ज कप्पियं ॥ १७४ ॥ अट्ठारस पुरिसेसुं वीसं इत्थीसु दस नपुंसेसु। पव्वावणाअणरिहा पन्नत्ता वीयरागेहिं ॥ १७५ ॥ ते चामी—बाले १ वुड्ढे २ नपुंसे ३ य, कीवे ४ जड्ढे ५ य वाइए ६। तेणे ७ रायावगारी ८ य, उम्मत्ते ९ य अदंसणे १० ॥ ७९० ॥ १७५ ॥ दासे ११ दुट्ठे १२ य मूढे १३ य, अणत्ते १४ जुंगिए १५ इय। ओवद्धए १६ य भयगे १७, सेहनिप्फेडिए इय १८ ॥ ७९१ ॥ १७६ ॥ गुव्विणी बालवच्छा य पव्वावेउं न कप्पए इति [प्रवचन० अपि] ॥ तथा—पंडए १ वाइए २ कीवे ३, कुंभी ४ ईसालुयत्त्विय ५। सउणी ६ तक्कम्मसेवी य ७, पक्खियापक्खिए इय ॥ ८ ॥ ७९३ ॥ (१७७)

च–" लोओ परस्स दोसे हत्थाहत्थिं गुणे य गिण्हंतो। अप्पाणमप्पणच्चिय कुणइ सदोसं च सगुणं च ॥१७१॥" [ लोकः परस्य दोपान् हस्ताहस्ति गुणांश्च गृह्णन्। आत्मानमात्मनैव करोति सदोषं च सगुणं च ॥ १ ॥ ] २३॥

तथा–विकथावर्जनमिति ॥ २४ ॥ ( २९३ )

विकथानां–स्त्रीभक्तदेशराजगोचराणां स्वभावत एवाकुशलाशयसमुन्मीलननिबन्धनानां वर्जनं, एतत्कथाकरणे हि कृष्णनीलाद्युपाधिरिव स्फटिकमणिरात्मा कथ्यमानस्त्र्यादिचेष्टानामनुरूपतां प्रतिपद्यते ॥ २४ ॥

तथा–उपयोगप्रधानतेति ॥ २५ ॥ ( २९४ )

उपयोगः प्रधानः–पुरस्सरः सर्वकार्येषु यस्य स तथा तस्य भावस्तत्ता सा विधेया, निरुपयोगानुष्ठानस्य द्रव्यानुष्ठानत्वात्, "अनुपयोगो द्रव्य" मिति वचनात् ॥ २५ ॥

तथा–निश्चितहितोक्तिरिति ॥ २६ ॥ ( २९५ )

निश्चितस्य–संशयविपर्ययानध्यवसायबाधदोषपरिहारेण निर्णीतस्य हितस्य च–परिणामसुन्दरस्योक्तिः–भाषणम्, अत एव पठ्यते–" कुदृष्टं कुश्रुतं चैव, कुज्ञातं कुपरीक्षितम्। कुभावजनकं सन्तो, भाषन्ते न कदाचन ॥ १७२ ॥ " २६ ॥

तथा–प्रतिपन्नानुपेक्षेति ॥ २७ ॥ ( २९६ )

प्रतिपन्नस्य–अभ्युपगतस्य गुरुविनयस्वाध्यायादेः साधुसमाचारविशेषस्यानुपेक्षा–अनवधीरणा, अवधीरितो हि समाचारो जन्मातरेऽपि दुर्लभः स्यात् ॥ २७ ॥

अस्थाने-भापितोपयोगायोग्यत्वेनाप्रस्तावे अभापणं—कस्यचित्कार्यस्याभणनं, एवमेव साधोर्भापासमितत्वशुद्धिः स्यादिति ।

तथा—स्खलितप्रतिपत्तिरिति ॥ २१ ॥ ( २९० )

कुतोऽपि तथाविधप्रमाददोपात् स्खलितस्य—किञ्चिन्मूलगुणादावाचारविशेषे स्खलनस्य-विराधनालक्षणस्य जातस्य प्रतिपत्तिः—स्वतः परेण वा प्रेरितस्य सतोऽभ्युपगमः—तथोदितप्रायश्चित्ताङ्गीकारेण कार्यः, स्खलितकाले दोपाद् अनन्तगुणत्वेन दारुणपरिणामत्वात्तदप्रतिपत्तेः, अत एवोक्तम्-"उप्पण्णा उप्पण्णा माया अणुमग्गओ निहंतव्वा । आलोअणनिंदणगरहणाहि न पुणो विधीयंति ( य वीयंति ) ॥१६८॥ अणागारं परं कम्मं, नेव गूहे न निण्हवे । सुई सया वियडभावे, असंसत्ते जिइंदिए ॥ १६९ ॥" [ उत्पन्नोत्पन्ना मायाऽनुमार्गतो निहन्तव्या । आलोचननिन्दनगर्हणाभिः न पुनश्च द्वितीयं (वारं) ॥ १ ॥ अनाकारं ( मायामयं ) परं कर्म नैव गूहेत न निन्हुवीत । शुचिः सदा विकटभावः असंसक्तो जितेन्द्रियः ॥२॥ ] २१ ॥

तथा—पारुष्यपरित्याग इति ॥ २२ ॥ ( २९१ )

पारुष्यस्य—तीव्रकोपकपायोदयविशेषात्परुपभावलक्षणस्य तथाविधभापणादेः स्वपक्षपरपक्षाभ्यामसंवन्धयोग्यताहेतोः परित्यागः कार्यः, अपारुष्यरूपविश्वासमूलत्वात्सर्वसिद्धीनाम्, यदुच्यते—" सिद्धेर्विश्वासिता मूलं, यद्यूथपतयो गजाः । सिंहो मृगाधिपत्येऽपि, न मृगैरनुम्यते ॥ १७० ॥ " ॥ २२ ॥

तथा—सर्वत्रापिशुनतेति ॥ २३ ॥ ( २९२ )

'सर्वत्र' स्वपक्षे परपक्षे च परोक्षं दोषाणामनाविष्करणं, परदोपग्राहितायां हि आत्मैव दोपवान् कृतः स्यात्, पठ्यते

५-६ पञ्चा० ३०८-९-१०) [धर्मार्थिमुद्यतेन सर्वस्याप्रीतिकं न कर्तव्यम्। संयमोऽप्येवमेव श्रेयः अत्र च भगवानुदाहरणम् ॥१॥ स तापसाश्रमात् तेषामप्रीतिकं ज्ञात्वा। परममबोधिबीजं ततो गतो हन्ताकालेऽपि ॥२॥ इति सर्वेणापि सम्यक् शक्यमप्रीतिकं सदा जनस्य । नियमात् परिहर्त्तव्यं इतरस्मिन् स्वतत्त्वचिन्तैव ॥ ३ ॥] इतरस्मिन्–अशक्यप्रतीकारेऽप्रीतिके स्वतत्त्वस्य–स्वापराधरूपस्य चिन्ता कार्या, यथा–"ममैवायं दोषो यदपरभवे नार्जितमहो, शुभं यस्माल्लोको भवति मयि कुप्रीतिहृदयः। अपापस्यैवं मे क्व यमपरथा मत्सरमयं, जनो याति स्वार्थं प्रति विमुखतामेत्य सहसा ? ॥ १६६ ॥" १७ ॥ एतदेवाह–

भावतः प्रयत्न इति ॥ १८ ॥ ( २८७ )

'भावतः' चित्तपरिणामलक्षणात् 'प्रयत्नः' परोद्वेगाहेतुतायामुद्यमः कार्य इति, अयमत्र भावः–यदि कथञ्चित्तथाविधप्रघट्टकवैषम्यात् कायतो वचनतो वा न परोद्वेगहेतुभावः परिहर्त्तुं पार्यते तदा भावतो-रुचिलक्षणात् परोद्वेगं परिहर्त्तुं यत्नः कार्यः, भावस्यैव फलं प्रति अवन्ध्यहेतुत्वात्, उक्तं च-"अभिसन्धेः फलं भिन्नमनुष्ठाने समेऽपि हि। परमोऽतः स एवेह, वारीव कृषिकर्मणि ॥ १६७ ॥" १८ ॥

तथा–अशक्ये बहिश्चार इति ॥ १९ ॥ ( २८८ )

अशक्ये–कुतोऽपि[1] वैगुण्यात्समाचरितुमपार्यमाणे तपोविशेषादौ क्वचिदनुष्ठाने 'बहिश्चारो' बहिर्भावलक्षणः तस्मात्कार्यः, अशक्यं नारब्धव्यमित्यर्थः, अशक्यारम्भस्य क्लेशैकफलत्वेन साध्यसिद्धेरनङ्गत्वात् ॥ १९ ॥

तथा–अस्थानाभाषणमिति ॥ २० ॥ ( २८९ )

1 गुणरहितपणाथी

(दश. नि. ३५०–१) [संवेगो निर्वेदो विषयविवेकः सुशीलसंसर्गः। आराधना तपो ज्ञानदर्शनचारित्रविनयश्च ॥१॥ क्षान्तिश्च मार्दवमार्जवं विमुक्तता अदीनता तितिक्षा च। आवश्यकपरिशुद्धिश्च भिक्षुलिङ्गान्येतानि ॥ २ ॥ ]

तथा–यथाशक्ति तपःसेवनमिति ॥ ६२ ॥ (३३१)

यथाशक्ति तपसः–अनशनादेः सेवनम्–आचरणं, यथोक्तम्–"कायो न केवलमयं परितापनीयो, मिष्टै रसैर्बहुविधैर्न च लालनीयः। चित्तेन्द्रियाणि न चरन्ति यथोत्पथेन, वश्यानि येन च तदाचरितं जिनानाम् ॥ १८८ ॥" ॥ ६२ ॥

तथा–परानुग्रहक्रियेति ॥ ६३ ॥ (३३२)

परेषां–स्वपक्षगतानां परपक्षगतानां च जन्तूनां महत्या करुणापरायणपरिणामितया अनुग्रहकरणं-ज्ञानाद्युपकारसंपादनमिति ॥ ६३ ॥

तथा–गुणदोषनिरूपणमिति ॥ ६४ ॥ (३३३)

सर्वत्र विहारादौ कर्त्तव्ये गुणदोषयोर्निरूपणं कार्यम् ॥ ६४ ॥

तथा–बहुगुणे प्रवृत्तिरिति ॥ ६५ ॥ (३३४)

यद्बहुगुणं उपलक्षणत्वात्केवलगुणमयं वा कार्यमाभासते तत्र प्रवर्त्तितव्यं, नान्यथेति ॥ ६५ ॥

तथा–क्षान्तिमार्दवमार्जवमलोभतेति ॥ ६६ ॥ (३३५)

एते क्षान्त्यादयश्चत्वारोऽपि कषायचतुष्टयप्रतिपक्षभूताः साधुधर्ममूलभूमिकास्वरूपाः नित्यं कार्या इति॥६६॥ अत एव–

तथा-निदानपरिहार इति ॥ ५८ ॥ (३२७)

नितरां दीयते-लूयते सम्यग्दर्शनप्रपञ्चबहुलमूलजालो ज्ञानादिविषयविशुद्धविनयविधिसमुद्धुरस्कन्धो विहितावदातदाना-
दिभेदशाखोपशाखाखचितो निरतिशयसुरनरभवप्रभवसुखसंपत्तिप्रसूनाकीर्णोऽनभ्यर्णीकृतनिखिलव्यसनव्याकुलशिवालयधर्म-
फलोल्वणो धर्मकल्पतरुरनेन मुरुद्ध्याद्याशंसनपरिणामपरशुनेति निदानं तस्य परिहारः, अत्यन्तदारुणपरिणामत्वात्तस्य, य-
थोक्तम्-"यः पालयित्वा चरणं विशुद्धं, करोति भोगादिनिदानमज्ञः । द्रो वर्द्धयित्वा फलदानदक्षं, स नन्दनं भस्मयते
वराकः ॥ १८५ ॥ " ॥ ५८ ॥ तर्हि किं कर्त्तव्यमित्याह—

विहितमिति प्रवृत्तिरिति ॥ ५९ ॥ (३२८)

विहितं-कर्त्तव्यतया भगवता निरूपितमेतदिति एवं सर्वत्र धर्मकार्ये प्रवृत्तिः ॥ ५९ ॥

तथा-विधिना स्वाध्याययोग इति ॥ ६० ॥ (३२९)

'विधिना' कालविनयाद्याराधनरूपेण स्वाध्यायस्य-वाचनादेर्योगो-व्यापारणमिति ॥ ६० ॥

तथा-आवश्यकापरिहाणिरिति ॥ ६१ ॥ (३३०)

आवश्यकानां-स्वकाले नियमात्कर्त्तव्यविशेषाणां प्रत्युपेक्षणादीनां अपरिहाणिः-अभ्रंशः, इदं च प्रधानं साधुलिङ्गं,
तथा च दशवैकालिकनिर्युक्तिः-"संवेगो निव्वेओ विसयविवेगो सुसीलसंसग्गी । आराहणा तवो नाणदंसणचरित्तविणओ य
॥ १८६ ॥ खंती य मद्दवऽज्जव विमुत्तयाऽदीणया तितिक्खा य । आवस्सगपरिसुद्धी य भिक्खुलिंगाइं एयाइं ॥१८७॥"

तथा–परकृतविलवास इति ॥ ५३ ॥ ( ३२२ )

परैः–आत्मव्यतिरिक्तैः कृते–स्वार्थमेव निष्पादिते विल इव विले–असंस्करणीयतया उपाश्रये वासः ॥ ५३ ॥

तथा–अवग्रहशुद्धिरिति ॥ ५४ ॥ ( ३२३ )

अवग्रहाणां–देवेन्द्र १ राज २ गृहपति ३ शय्यातर ४ साधर्मिका ५ भाव्यभूभागलक्षणानां शुद्धिः-तदनुज्ञया परिभोगलक्षणा कार्या ॥ ५४ ॥

मासादिकल्प इति ॥ ५५ ॥ ( ३२४ )

मासः–प्रतीतरूप एव, आदिशब्दाच्चतुर्मासी गृह्यते, ततो मासकल्पश्चतुर्मासीकल्पश्च कार्यः ॥ ५५ ॥ यदा तु दुर्भिक्षक्षितिपतिविग्रहजङ्घाबलक्षयादिभिर्निमित्तैः क्षेत्रविभागेन मासादिकल्पः कर्तुं न पार्यते तदा किं कर्त्तव्यमित्याह–

एकत्रैव तत्क्रियेति ॥ ५६ ॥ ( ३२५ )

एकस्मिन्नेव-मासकल्पादियोग्यक्षेत्रे वसत्यन्तरविभागेन वीथ्यन्तरविभागेन च सर्वथा निरवकाशतायां संस्तारकभूमिपरिवर्त्तन 'तत्क्रिया' मासादिकल्पक्रियेति, अत एव पठ्यते–"संथारपरावत्तं अभिग्गहं चेव चित्तरूवं तु । एत्तो चरित्तिणो इह विहारपडिमाइसु करेंति ॥१८४॥ [संस्तारकपरावर्त्तमभिग्रहं चैव चित्ररूपं तु। अतश्चारित्रिण इह विहारप्रतिमादिषु यतन्ते॥१॥]

तत्र च–सर्वत्राममत्वमिति ॥ ५७ ॥ (३२६)

'सर्वत्र' पीठफलकादौ नित्यवासोपयोगिनि अन्यस्मिंश्चाममत्वम्–अममीकार इति ॥५७ ॥

विभूषापरिवर्जनमिति ॥ ४८ ( ३१७ )

विभूषायाः—शरीरोपकरणयोः शृङ्गारलक्षणायाः परिवर्जनमिति, एतेषां च स्त्रीकथादीनां नवानामपि भावानां मोहोद्रेकहेतुत्वात् निषेधः कृत इति ॥ ४८ ॥

तथा—तत्त्वाभिनिवेश इति ॥ ४९ ॥ ( ३१८ )

तत्त्वे—सम्यग्दर्शनज्ञानचारित्रानुसारिणि क्रियाकलापे अभिनिवेशः-शक्यकोटिमागते कर्तुमत्यन्तादरपरता, अन्यथा तु मनःप्रतिबन्ध एव कार्यः ॥ ४९ ॥

तथा युक्तोपधिधारणेति ॥ ५० ॥ ( ३१९ )

युक्तस्य—शास्त्रप्रसिद्धप्रमाणसमन्वितस्य लोकपरिवादाविषयस्य स्वपरयो रागानुत्पादकस्य उपधेः—वस्त्रपात्रादिलक्षणस्य धारणा-उपभोगः, उपलक्षणत्वात्परिभोगश्च गृह्यते, यथोक्तम्—" धारणया उवभोगो परिहरणा होइ परिभोगो"(१८२)
[ धारणोपभोगः परिहरणा भवति परिभोगः ]

तथा—मूर्च्छात्याग इति ॥ ५१ ॥ ( ३२० )

मूर्च्छाया—अभिष्वङ्गस्य सर्वत्र बाह्येऽर्थेऽभ्यन्तरे च शरीरबलादौ वर्जनम् ॥ ५१ ॥

तथा—अप्रतिबद्धविहरणमिति ॥ ५२ ॥ ( ३२१ )

अप्रतिबद्धेन—देशग्रामकुलादावमूर्च्छितेन विहरणं—विहारः कार्यः ॥ ५२ ॥

साधोस्तच्छरीरसंयोगसंक्रान्तोष्मस्पर्शवशेन मनोविश्रोतसिकादोपसंभवात् ॥ ४२ ॥

इन्द्रियाप्रयोग इति ॥ ४३ ॥ ( ३१२ )

इन्द्रियाणां— चक्षुरादीनां कथञ्चिद्विषयभावापन्नेष्वपि गुह्योरुवदनकक्षास्तनादिषु स्त्रीशरीरावयवेषु अप्रयोगः—अव्यापारणं कार्यं, पुनस्तन्निरीक्षणाद्यर्थं न यत्नः कार्यः ॥ ४३ ॥

कुड्यान्तरदाम्पत्यवर्जनमिति ॥ ४४ ॥ ( ३१३ )

कुडयं—भित्तिस्तदन्तरं—व्यवधानं यस्य तत्तथा दाम्पत्यं—दयितापतिलक्षणं युगलं, कुड्यान्तरं च दांपत्यं चेति समासः, तस्य वर्जनं, वसतौ स्वाध्यायध्यानादौ च न तत्र स्थातव्यं यत्र कुड्यान्तरं दाम्पत्यं भवतीति ॥ ४४ ॥

पूर्वक्रीडितास्मृतिरिति ॥ ४५ ॥ ( ३१४ )

पूर्वं—प्रव्रज्याप्रतिपत्तिकालात् प्राक् क्रीडितानां—प्रौढप्रमोदप्रदप्रमदाप्रसङ्गप्रभृतिविलसितानामस्मृतिः—अस्मरणं, अयं च भुक्तभोगान् प्रत्युपदेश इति ॥ ४५ ॥

प्रणीताभोजनमिति ॥ ४६ ॥ ( ३१५ )

प्रणीतस्य—अतिस्निग्धस्य गलत्स्नेहविन्दुलक्षणस्याहारस्याभोजनम्—अनुपजीवनमिति ॥ ४६ ॥

अतिमात्राभोग इति ॥ ४७ ( ३१६ )

अप्रणीतस्याप्याहारस्यातिमात्रस्य—द्वात्रिंशत्कवलादिशास्त्रसिद्धप्रमाणातिक्रान्तस्याभोगः-अभोजनम् ॥ ४७ ॥

२६९ प्रव. ७३७ अपि ) [ वेदनोपशमाय वैयावृत्त्याय ईर्यार्थं च संयमार्थं च । तथा प्राणप्रत्ययं षष्ठं पुनः धर्मचिन्तायै ॥१॥]

तथा—विविक्तवसतिसेवेति ॥ ४० ॥ ( ३०९ )

विविक्तायाः—स्त्रीपशुपण्डकविवर्जितायाः वसतेः—आश्रयस्य सेवा—परिभोगो विधेयः, अविविक्तायां हि वसतौ व्रतिनां ब्रह्मचर्यव्रतविलोपप्रसङ्ग इति॥४०॥ अत एव ब्रह्मचर्यव्रतपरिपालनाय एवच्छेषगुप्तीरभिधातुं 'स्त्रीकथापरिहार इत्यादि विभूषापरिवर्जन' मिति पर्यन्तं सूत्राष्टकमाह—

तत्र—स्त्रीकथापरिहार इति ॥ ४१ ॥ ( ३१० )

स्त्रीणां कथा स्त्रीकथा, सा च चतुर्विधा—जाति १ कुल २ रूप ३ नेपथ्य ४ भेदात्, तत्र जातिः—ब्राह्मणादिका, तत्कथा यथा—" धिक् ब्राह्मणीर्धवाभावे, या जीवन्ति मृता इव । धन्या शूद्री जनैर्मान्या, पतिलक्षेऽप्यनिन्दिता ॥ १८० ॥" कुलं—चौलुक्यचाहुमानादि, तत्कथा—" अहो चौलुक्यपुत्रीणां, साहसं जगतोऽधिकम् । विशन्त्यग्नौ मृते पत्यौ, याः प्रेमरहिता अपि ॥ १८१ ॥ " रूपं—शरीराकारः, तत्कथा—" अहो अन्ध्रपुरन्ध्रीणां, रूपं जगति वर्ण्यते । यत्र यूनां दृशो लग्ना, न मन्यन्ते परिश्रमम् ॥ १८२ ॥" नेपथ्यं—वस्त्रादिवेषग्रहः, तत्कथा—" धिग्नारीरौदीच्या बहुवस्त्राच्छादिताङ्गलतिकत्वात् । यद्यौवनं न यूनां चक्षुर्मोदाय भवति सदा ॥ १८३ ॥ " तस्याः स्त्रीकथायाः परिहार इति ॥४१॥

निषद्यानुपवेशनमिति ॥ ४२ ॥ ( ३११ )

निषद्यायां—स्त्रीनिवेशस्थाने पट्टपीठादौ मुहूर्त्तं यावत् स्त्रीपूत्थितास्वपि अनुपवेशनं कार्यं, सद्य एव स्त्रीनिषद्योपवेशने

गुरोर्निवेदनमिति ॥ ३५ ॥ (३०४)

हस्तशताद् बहिर्गृहीतस्येर्याप्रतिक्रमणगमनागमनालोचनापूर्वकं हस्तशतमध्ये तु एवमेव निवेदनं—गुरोः दायकहस्तमात्रन्यापारप्रकाशनेन लब्धस्य ज्ञापनं समर्पणं च कार्यमिति ॥३५॥ अत एव

स्वयमदानमिति ॥ ३६ ॥ ( ३०५ ) ॥

स्वयम्—आत्मनाऽदानं—लब्धस्यान्यस्मै अवितरणं, गुर्वायत्तीकृतत्वात्तस्य ॥ ३६ ॥ ततो यदि गुरुः स्वयमेव कस्मैचित् बालादिकाय किञ्चिद्दद्यात् तत् सुन्दरमेव, अथ कुतोऽपि व्यग्रतया न स्वयं ददाति किंतु तेनैव दापयति तदा—

तदाज्ञया प्रवृत्तिरिति ॥ ३७ ॥ ( ३०६ )

तस्य—गुरोराज्ञया—निरोधेन प्रवृत्तिर्दाने कार्या ॥ ३७॥ तत्र च—

उचितच्छन्दनमिति ॥ ३८ ॥ ( ३०७ )

उचितस्य—समानसंभोग्यबालादेः साधोः न पुनरन्यस्य, तं प्रति दानानधिकारित्वात् तस्य, छन्दनं—छन्दस्य—अभिलापस्य अन्नादिग्रहणं प्रत्युत्पादनं कार्यं ॥३८॥ ततो दत्तावशिष्टस्यान्नादेः—

धर्मायोपभोग इति ॥ ३९ ॥ ( ३०८ )

धर्माय—धर्माधारशरीरसंधारणद्वारेण धर्मार्थमेव च, न पुनः शरीरवर्णबलाद्यर्थमपि, उपभोगः—उपजीवनम्, तथा चार्षम्—

" वेयण १ वेयावच्चे २ इरियट्ठाए ३ य संयमट्ठाए ४। तह पाणवत्तियाए ५ छट्ठं पुण धम्मचिंताए ६ ॥ १७९ ॥ " (पंच.

धुक्रिया ॥६७॥

सोगंधिए ९ य आसत्ते १०, एए दस नपुंसगा। संकिलिट्ठत्ति साहूणं, पव्वावेउं अकप्पिया ॥ ७९४ ॥ (१७८) (प्रव. अपि)

। एतत्स्वरूपं च निशीथाध्ययनात् ज्ञातव्यम् ॥ ३० ॥

तथा—उचिते अनुज्ञापनेति ॥ ३१ ॥ (३००)

उचिते—अनुचितविलक्षणे पिण्डादौ अनुज्ञापना—अनुजानतोऽनुमन्यमानस्य स्वयमेव गुरोर्द्रव्यस्वामिनो वा प्रयोजनं, यथा—अनुजानीत यूयं मम ग्रहीतुमेतदिति, अन्यथा अदत्तादानप्रसङ्गात् ॥ ३१ ॥

तथा—निमित्तोपयोग इति ॥ ३२ ॥ (३०१)

निमित्ते—उचिताहारादेर्ग्रहीतुमभिलषितस्य शुद्ध्यशुद्धिसूचके शकुने साधुजनप्रसिद्धे, प्रवृत्ते सतीति गम्यते, उप-
योगः—आभोगः कार्यः, अत्र च निमित्ताशुद्धौ चैत्यवन्दनादिकुशलक्रियापूर्वकं निमित्तान्तरमन्वेषणीयं, एवं यदि त्रीन् वारान्
निमित्तशुद्धिर्न स्यात्तदा तद्दिने न तेन किञ्चिद् ग्राह्यं, यदि परमन्यानीतं भोक्तव्यमिति ॥ ३२ ॥ निमित्तशुद्धावपि—

अयोग्येऽग्रहणमिति ॥ ३३ ॥ (३०२)

अयोग्ये—उपकाराकारकत्वेनानुचिते पिण्डादावग्रहणम्—अनुपादानं कार्यमिति ॥३३॥

तथा—अन्ययोग्यस्य ग्रह इति ॥ ३४ ॥ (३०३)

अन्यस्य—आत्मव्यतिरिक्तस्य गुरुग्लानबालादेः 'यद्' योग्यम्—उपष्टम्भकत्वेनोचितं तस्य ग्रहो विधेय इति ॥
॥३४॥ एवं च गृहीतस्य किं कार्यमित्याह—

एष द्रव्याभिग्रहो नाम ॥ १ ॥ ] इत्यादिशास्त्रसिद्धानां ग्रहणम्–अभ्युपगमः कार्यः ॥ ८० ॥

**तथा--विधिवत्पालनमिति ॥ ८१ ॥ ( ३५० )**

विधिवद्–विधियुक्तं यथा भवति तथा पालनमभिग्रहाणामिति ॥ ८१ ॥

**तथा--यथाऽर्हं ध्यानयोग इति ॥ ८२ ॥ ( ३५१ )**

'यथार्हं' यो यस्य योग्यस्तदनतिक्रमेण 'ध्यानयोगो' ध्यानयोर्धर्म्यशुक्ललक्षणयोर्योगः, अथवा यथार्हमिति यो देशः कालो वा ध्यानस्य योग्यस्तदनुल्लङ्घनेनेति ॥ ८२ ॥

**तथा--अन्ते संलेखनेति ॥ ८३ ॥ ( ३५२ )**

अन्ते–आयुःपर्यन्ते विज्ञाते सति संलेखना–शरीरकषाययोस्तपोविशेषभावनाभ्यां कृशीकरणम् ॥ ८३ ॥ परमत्र–

**संहननाद्यपेक्षणमिति ॥ ८४ ॥ ( ३५३ )**

संहननस्य–शरीरसामर्थ्यलक्षणस्य आदिशब्दात् चित्तवृत्तेः सहायसंपत्तेश्च अपेक्षणम्–आश्रयणं कार्यं, संहननाद्यपेक्ष्य संलेखना विधेयेति भावः ॥ ८४ ॥ नन्दनयोर्द्रव्यसंलेखनाभावसंलेखनयोः काऽत्यन्तमादरणीयेत्याह–

**भावसंलेखनायां यत्न इति ॥ ८५ ॥ ( ३५४ )**

भावसंखेलनायां–कषायेन्द्रियविकारतुच्छीकरणरूपायां यत्नः–आदरः कार्यः, द्रव्यसंलेखनाया अपि भावसंलेखनार्थमुपदेशात्, अयमत्र भावः–इह मुमुक्षुणा भिक्षुणा प्रत्यहं मरणकालपरिज्ञानयत्नपरेण स्थेयं, मरणकालपरिज्ञानोपायाश्च

निर्जरार्थं कार्यं इति, यथोक्तम् " मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः " इति ( तत्त्वा० ९-८ )

तथा--उपसर्गातिसहनमिति ॥ ७७ ॥ ( ३४६ )

उपसृज्यन्ते--पीडापरिगतैर्वध्यन्ते ये ते उपसर्गाः, ते च दिव्यमानुषतैरश्चात्मसंवेदनीयभेदाच्चतुर्द्धा, तेषामतिसहनम्--अभिभवनं, अन्यथा व्यसनमयत्वेन संसारस्य तेषामनतिसहने मूढमतित्वप्रसङ्गात्, यथोक्तम्--" संसारवर्त्यपि समुद्विजते विपद्भ्यो, यो नाम मूढमनसां प्रथमः स नूनम्। अम्भोनिधौ निपतितेन शरीरभाजा, संसृज्यतां किमपरं सलिलं विहाय ? १९२ "

तथा--सर्वथा भयत्याग इति ॥ ७८ ॥ ( ३४७ )

'सर्वथा' सर्वैः प्रकारैरिहलोकपरलोकभयादिभिर्भयस्य--भीतेस्त्यागः--परिहारः, निरतिचारयतिसमाचारवशोपलब्धसमुत्कृष्टोपष्टम्भतया मृत्योरपि नोद्वेजितव्य, किं पुनरन्यभयस्थानेभ्य इति, अत एवोक्तमन्यत्र--" प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः। कृतकृत्याः प्रतीक्षन्ते, मृत्युं प्रियमिवातिथिम् ॥ १९३ ॥ " ॥ ७८ ॥

तथा--तुल्याश्मकाञ्चनतेति ॥ ७९ ॥ ( ३४८ )

तुल्ये--समाने अभिष्वङ्गाविषयतया अश्मकाञ्चने--उपलसुवर्णे यस्य स तथा तद्भावस्तत्ता ॥ ७९ ॥

तथा--अभिग्रहग्रहणमिति ॥ ८० ॥ ( ३४९ )

अभिग्रहाणां--द्रव्यक्षेत्रकालभावभिन्नानां " लेवडमलेवडं वा अमुगं दव्वं च अज्ज घेच्छामि। अमुगेण व दव्वेण च अह दव्वाभिग्गहो एस ॥ १९४ ॥" ( पञ्च. २९८ ) [ लेपकृदलेपकृद्वा अमुकं द्रव्यं चाद्य ग्रहीष्यामि। अमुकेन द्रव्येण वा

पूर्वापररात्रकाले जागरतो भावप्रतिलेखनेति ॥ १ ॥ ] ॥ ७१ ॥ एवमात्मन्यनुप्रेक्षिते यत्कृत्यं तदाह—

उचितप्रतिपत्तिरिति ॥ ७२ ॥ ( ३४१ )

उचितस्य--गुणवृंहकस्य प्रमादनिग्राहिणश्चानुष्ठानस्य प्रतिपत्तिः—अभ्युपगम इति ॥ ७२ ॥

तथा--प्रतिपक्षासेवनमिति ॥ ७३ ॥ ( ३४२ )

यो हि यदा येन दोषेण बाध्यमानो भवति तेन तदा तत्प्रतिपक्षभूतस्य गुणस्यासेवनं कार्यं, हिमपातपीडितेनेवाग्नेरिति॥

तथा--आज्ञाऽनुस्मृतिरिति ॥ ७४ ॥ ( ३४३ )

आज्ञाया--भगवद्वचनस्य पदे पदे हृदयेऽनुस्मृतिः कार्या, भगवद्वचनानुस्मरणस्य भगवत्स्मरणरूपत्वेन महागुणत्वात्, यदुक्तम्--"अस्मिन् हृदयस्थे सति हृदयस्थस्तत्त्वतो मुनीन्द्र इति । हृदयस्थिते च तस्मिन् नियमात्सर्वार्थसंसिद्धिः ॥१९१॥" ( षोडश. ) इति ॥

तथा--समशत्रुमित्रतेति ॥ ७५ ॥ ( ३४४ )

शत्रौ मित्रे च समानपरिणामता, एको हि तत्र निर्भर्त्सनादिभिरन्यस्तु स्तुतिवन्दनादिभिः स्वचित्तसंतोपं घटयन्तौ मां निमित्तमात्रमवलम्ब्य प्रवृत्तौ द्वावपि, न तु मत्कार्यं किञ्चनेति, ततः कोऽनयोरूनोऽधिको वा ममेति भावनया ॥ ७५ ॥

तथा--परीषहजय इति ॥ ७६ ॥ ( ३४५ )

परीषहाणां क्षुत्पिपासादीनां द्वाविंशतेरपि जयः--अभिभवः, तत्र दर्शनपरीषहस्य मार्गाच्यवनार्थं शेषाणां च कर्म-

क्रोधाद्यनुदय इति ॥ ६७ ॥ (३३६)

क्रोधादीनां चतुर्णां कषायाणामनुदयो–मूलत एवानुत्थानम् ॥ ६७ ॥

तथा–वैफल्यकरणमिति ॥ ६८ ॥ (३३७)

वैफल्यस्य–विफलभावस्य कथञ्चिदुदयप्राप्तानामपि क्रोधादीनां करणं, क्रोधादीनामुदये यच्चिन्तितं कार्यं तस्याकरणेन क्रोधाद्युदयो निष्फलः कार्य इति भावः, एवं च कृते पूर्वोक्ताः क्षान्त्यादय आसेविता भवन्ति ॥ ६८ ॥ क्रोधाद्यनुदयार्थिना च यत्कार्यं तदाह—

विपाकचिन्तेति ॥ ६९ ॥ (३३८)

विपाकस्य–क्रोधादिकषायफलस्य चिन्ता–विमर्शो विधेयः, यथा–" क्रोधात्प्रीतिविनाशं मानाद्विनयोपघातमाप्नोति। शाठ्यात्प्रत्ययहानिं सर्वगुणविनाशनं लोभात् ॥ १८९ ॥ " (प्रशम) इति ॥ ६९ ॥

तथा–धर्मोत्तरो योग इति ॥ ७० ॥ (३३९)

धर्मोत्तरो–धर्मफलः सर्व एव योगो–व्यापारो विधेयः, न पुनरट्टाट्टहासकिलकिलत्वादिः पापफल इति ॥ ७० ॥

तथा–आत्मानुप्रेक्षेति ॥ ७१ ॥ ( ३४० )

आत्मनः–स्वस्य अनुप्रेक्षा–पर्यालोचना भावप्रत्युपेक्षारूपा, यथा–किं कय किं वा सेसं किं करणिज्जं तवं न करेमि। पुव्वावरत्तकाले जागरओ भावपडिलेहत्ति ॥१९०॥ " ( ओघ. २६३ ) [ किं कृतं किं वा शेषं किं करणीयं तपो न करोमि।

तथा—ध्यानैकतानत्वमितीति ॥ ९८ ॥ (३६७)

ध्याने—धर्मध्यानादावेक एव तानः-चित्तप्रसर्पणरूपो यस्य स तथा तद्भावस्तत्त्वम्, इतिशब्दः समाप्तौ ॥ अथोपसंजिहीर्षुराह—

सम्यग्यतित्वमाराध्य, महात्मानो यथोदितम्। संप्राप्नुवन्ति कल्याणमिह लोके परत्र च ॥ २८ ॥

सम्यग् यतित्वम्—उक्तरूपमाराध्य-समासेव्य महात्मानो जना 'यथोदितं' यथा शास्त्रे निरूपितं, किमित्याह-'संप्राप्नुवन्ति' लभन्ते 'कल्याणं' भद्रं, क्वेत्याह—इह लोके परत्र चेति, प्रतीतरूपमेव ॥१॥ एतदेव विवरीषुराह—

क्षीराश्रवादिलब्ध्योघमासाद्य परमाक्षयम्। कुर्वन्ति भव्यसत्त्वानामुपकारमनुत्तमम् ॥ २९ ॥

क्षीरं— दुग्धं श्रोतृजनकर्णपूरेषु आश्रवति-क्षरतिभाषमाणो यस्यां लब्धौ सा क्षीराश्रवा, आदिशब्दान्मध्वाश्रवा सर्पिराश्रवा अमृताश्रवा चेत्यादिको यो 'लब्ध्योघो' लब्धिसंघातः तं 'आसाद्य' उपलभ्य 'परमाक्षयं' परमं—सर्वसुन्दरं अक्षयं च-अनेकधा उपजीव्यमानमपि अनुपरमस्वभावं, किमित्याह-'कुर्वन्ति' विदधति भव्यसत्त्वानां उपकर्तुं योग्यानां 'उपकारं' सम्यक्त्वज्ञानचारित्रलाभलक्षणं 'अनुपमं' निर्वाणैकफलत्वेन अन्योपकारातिशायिनमिति ॥२॥

मुच्यन्ते चाशु संसारादत्यन्तमसमञ्जसात्। जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतात् ॥ ३० ॥

'मुच्यन्ते' परिह्रियन्ते चः समुच्चये 'आशु' शीघ्रं 'संसारात्' भवात्, कीदृशादित्याह—अत्यन्तम्—अतीव संगतं-युक्तं अञ्जः—स्वरूपं यस्य स तथा तत्प्रतिषेधादसमञ्जसस्तस्मात्, अत एव जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतात्, ज-

तथा ग्रामैकरात्रादिविहरणमिति ॥ ९३ ॥ (३६२)

ग्रामे-प्रतीतरूपे उपलक्षणत्वान्नगरादौ च एका चासौ रात्रिश्चेत्येकरात्रः आदिशब्दात् द्विरात्रस्य मासकल्पस्य च ग्रहः तेन विहरणं, किमुक्तं भवति ?-यदा प्रतिमाकल्परूपो निरपेक्षो यतिधर्मः प्रतिपन्नो भवति तदा ऋतुबद्धे काले ग्रामे ज्ञातः सन् स एकरात्रं अज्ञातश्च एकरात्रं द्विरात्रं वा वसति, यथोक्तम्-" नाएगरायवासी एगं च दुगं च अन्नाए ( १९७ ) जिनकल्पिकयथालन्दकल्पिकशुद्धपरिहारिका ज्ञाता अज्ञाताश्च मासमिति ॥ ९३ ॥

तथा-नियतकालचारितेति ॥ ९४ ॥ (३६३)

नियते-तृतीयपौरुषीलक्षणे काले भिक्षार्थं संचरणं, यथोक्तम्-" भिक्खा पंथो य तइयाए "त्ति ॥९४॥

तथा-प्राय ऊर्ध्वस्थानमिति ॥ ९५ ॥ (३६४)

प्रायो-बाहुल्येन ऊर्ध्वस्थानं-कायोत्सर्गः ॥९५॥

तथा-देशनायामप्रबन्ध इति ॥ ९६ ॥ (३६५)

देशनायां-धर्मकथारूपायां धर्मं श्रोतुमुपस्थितेष्वपि तथाविधप्राणिषु अप्रबन्धः-अभूरिभावः, ' एगवयणं दुवयणं '-चेति वचनप्रामाण्यात् ॥९६॥

तथा-सदाऽप्रमत्ततेति॥ ९७ ॥ (३६६)

' सदा ' दिवा रात्रौ चाप्रमत्तता-निद्रादिप्रमादपरिहारः ॥९७॥

विधिना देहत्याग इतीति ॥ ८७ ॥ (३५६)

'विधिना' आलोचनव्रतोच्चारपरक्षामणानशनशुभभावनापञ्चपरमेष्ठिस्मरणलक्षणेन देहस्य त्यागः—परित्यजनं, पण्डितमरणाराधनमित्यर्थः, इतिशब्दः परिसमाप्तौ, इत्युक्तः सापेक्षयतिधर्मः ॥८७॥ अथ द्वितीयधर्मप्रस्तावनायाह—

निरपेक्षयतिधर्मस्त्विति ॥ ८८ ॥ (३५७)

निरपेक्षयतीनां धर्मः पुनरयं वक्ष्यमाणः ॥८८॥ तमेवाह—

वचनगुरुतेति ॥ ८९ ॥ (३५८)

वचनमेव—आगम एव गुरुः सर्वप्रवृत्तौ निवृत्तौ चोपदेशकत्वेन यस्य स तथा तद्भावस्तत्ता ॥८९॥

तथा—अल्पोपधित्वमिति ॥ ९० ॥ (३५९)

अल्पः स्थविरापेक्षया उपधिः—वस्त्रपात्रादिरूपो यस्य स तथा यद्भावस्तत्त्वं, उपधिप्रमाणं च विशेषशास्त्रादवसेयम् ॥

तथा—निष्प्रतिकर्मशरीरतेति ॥ ९१ ॥ (३६०)

निष्प्रतिकर्म—तथाविधग्लानाद्यवस्थायामपि प्रतिकारविरहितं शरीरं यस्य स तथा तद्भावस्तत्त्वम् ॥९१॥ अत एव—

अपवादत्याग इति ॥ ९२ ॥ (३६१)

अपवादस्य—उत्सर्गापेक्षयाऽपकृष्टवादस्य त्यागः कार्यः, नहि निरपेक्षो यतिः सापेक्षयतिरिव उत्सर्गासिद्धावपवादमपि समालम्ब्य अल्पदोषं वहुगुणं च कार्यमारभते, किंतूत्सर्गपथप्राप्तं केवलगुणमयमेवेति ॥९२॥

आगमदेवतावचनस्वप्रतिभातथाविधानिष्टस्वप्नदर्शनादयोऽनेके शास्त्रलोकप्रसिद्धा इति, ततो विज्ञाते मरणकाले पूर्वमेव द्वादश वर्षाणि यावदुत्सर्गतः संलेखना कार्या, तत्र च–“ चत्तारि विचित्ताइं विगईनिज्जूहियाइं चत्तारि। संवच्छरे य दोण्णि उ एगंतरियं च आयामं ॥ ८८२ ॥ ( १९५ ) नाइविगिट्ठो य तवो छम्मासे परिमियं च आयामं। अन्नेऽवि य छम्मासे होइ विगिट्ठं तवोकम्मं ॥ ८८३ ॥ ( १९६ ) वासं कोडीसहियं आयामं काउमाणुपुव्वीए। गिरिकंदरं तु गंतुं पायवगमणं अह करेइ ॥ ८८४ ॥ ( १९७ ) ” ( पञ्च. १५७४-५-६ ) [ चत्वारि ( वर्षाणि ) विचित्राणि तपांसि विकृतिभिर्निर्यूहितानि चत्वारि। संवत्सरौ च द्वौ तु एकान्तरितं चाचामाम्लम् ॥ १ ॥ नातिविकृष्टं च तपः षण्मासान् परिमितं चाचामाम्लम्। अन्यानपि च षण्मासान् भवति विकृष्टं तपःकर्म ॥ २ ॥ वर्षं कोटीसहितमाचामाम्लं कृत्वानुपूर्व्या। गिरिकन्दरां तु गत्वा पादपोपगमनमथ करोति ॥३॥ ] यदा तु कुतोऽपि संहननादिवैगुण्यान्न शक्यते इयान् संलेखनाकालः साधयितुं तदा मासवर्षपरिहाण्या जघन्यतोऽपि षण्मासान् यावत्संलेखना कार्या, असंलिखितशरीरकषायो हि भिक्षुरनशनमधिष्ठितः सहसा धातुक्षये समुपस्थिते न सुगतिफलं तथाविधं समाधिमाराधयितुं साधीयान् स्यादिति ॥ ८५ ॥

ततो विशुद्धं ब्रह्मचर्यमिति ॥ ८६ ॥ (३५५)

विशेषेण–अतिनिबिडब्रह्मचर्यगुप्तिविधानरूपेण शुद्धं ब्रह्मचर्यं–प्रतीतमेव विधेयं, यदत्र संलेखनाधिकारे विशुद्धब्रह्मचर्योपदेशनं तद्वेदोदयस्य क्षीणशरीरतायामपि अत्यन्तदुर्द्धरत्वख्यापनार्थमिति ॥ ८६ ॥ अथ संलेखनानन्तरं आशुघातके वा विषविशूचिकादौ दोषे सति यद्विधेयं तदाह–

तस्यैव च गुरुत्वादिति ॥ ६ ॥ ( ३७३ )

तस्य–परार्थसंपादनस्य एव चेत्यवधारणे गुरुत्वात्-सर्वधर्मानुष्ठानेभ्य उत्तमत्वात् ॥६॥ एतदपि कथमित्याह–

सर्वथा दुःखमोक्षणादिति ॥ ७ ॥ ( ३७४ )

'सर्वथा' सर्वैः प्रकारैः स्वस्य परेषां चेत्यर्थः 'दुःखानां' शारीरमानसरूपाणां मोचनात् ॥७॥

तथा–संतानप्रवृत्तेः ॥ ८ ॥ ( ३७५ )

परार्थसंपादनात् संतानस्य–शिष्यप्रशिष्यादिप्रवाहरूपस्य प्रवृत्तेः ॥८॥

तथा–योगत्रयस्याप्युदग्रफलभावादिति ॥ ९ ॥ ( ३७६ )

'योगत्रस्यापि' मनोवाक्कायकरणव्यापाररूपस्य परार्थसंपादने क्रियमाणे, न पुनरेकस्यैवेत्यपिशब्दार्थः, 'उदग्रफलभावात्' उदग्रस्य-प्रकारान्तरेणानुपलभ्यमानत्वेनात्युत्तमस्य फलस्य–कर्मनिर्जरालक्षणस्य भावात्, नहि यथा देशनायां सर्वात्मना व्याप्रियमाणं मनोवाक्कायत्रयं फलमाप्नोति तथाऽन्यत्र कृत्यान्तर इति ॥९॥

तथा–निरपेक्षधर्मोचितस्यापि तत्प्रतिपत्तिकाले परपरार्थसिद्धौ तदन्यसंपादकाभावे प्रतिपत्तिप्रतिषेधाच्चेति ॥ १० ॥ ( ३७७ )

निरपेक्षधर्मोचितस्यापि, किं पुनरतदनुचितस्येत्यपिशब्दार्थः, 'तत्प्रतिपत्तिकाले' निरपेक्षधर्मांगीकरणसमये 'परपरार्थसिद्धौ' परेषां परार्थस्य–सम्यग्दर्शनादेः प्रधानप्रयोजनस्य सिद्धौ साध्यायां विषये 'तदन्यसंपादकाभावे' तस्मात्-

अत एव 'प्रधानपरिणतेः' सर्वोत्तमात्मपरिणामस्य 'विधूतमोहस्य' समुत्तीर्णमूढभावतन्द्रामुद्रस्य 'परमसत्त्वार्थकर्त्तुः' निर्वाणावन्ध्यबीजसम्यक्त्वादिसत्त्वप्रयोजनविधातुः 'सामायिकवतः' माध्यस्थ्यगुणतुलारोपणवशसमतोपनीतस्वजनपरजनादिभावस्य 'विशुद्ध्यमानाशयस्य' धवलपक्षक्षमापतिमण्डलस्येव प्रतिकलमवदातमानसस्य 'यथोचितप्रवृत्तेः' प्रस्तावमायोग्यप्रारब्धप्रयोजनस्य अत एव 'सात्मीभूतशुभयोगस्य' अयःपिण्डस्येव वह्निना शुभयोगेन सह समानीभूतात्मनो यतिविशेपस्य 'श्रेयान्' अतिप्रशस्यः सापेक्षयतिधर्म एव, नेतर इति ॥२॥ कुत इत्याह—

वचनप्रामाण्यादिति ॥ ३ ॥ (३७०)

भगवदाज्ञाप्रमाणभावात् ॥३॥ एतदपि कुत इत्याह–

संपूर्णदशपूर्वविदो निरपेक्षधर्मप्रतिपत्तिप्रतिपेधादिति ॥ ४ ॥ (३७१)

सुगममेव, प्रतिपेधश्च "गच्छे च्चिय निम्माओ जा पुव्वा दस भवे असंपुण्णा । नवमस्स तइयवत्थू होइ जहन्नो सुआभिगमो ॥ १९८ ॥ [गच्छे एव परिकर्मितो यावत् पूर्वाणि भवेयुः दशासंपूर्णानि । नवमस्य च तृतीयं वस्तु भवति जघन्यः श्रुताधिगमः ॥१॥] ( उपदेश पदे ८५१ प्रव. ५७६ ) इति वचनादवसीयते ॥४॥ एपोऽपि किमर्थमित्याह–

परार्थसंपादनोपपत्तेरिति ॥ ५ ॥ (३७२)

परार्थस्य–परोपकारलक्षणस्य संपादनं–करणं तदुपपत्तेः, स हि दशपूर्वधरस्तीर्थोपष्टम्भलक्षणं परार्थं संपादयितुं यस्मादुपपद्यत इति ॥५॥ यदि नामैवं ततोऽपि किमित्याह–

ध्यति' निष्पद्यते, अन्यथा सामग्रीसमग्रताऽयोगात्, अत्रैव व्यतिरेकमाह-'दवीयसाऽपि' अतिचिररूपतया दूरतरवर्तिनाऽपि कालेन 'वैकल्ये तु' सामग्रिकाया विकलतायां पुनर्न जातुचित्-न कदाचिदपीति ॥ २ ॥ एवं सति यत्कर्त्तव्यं तदाह-

**तस्माद्यो यस्य योग्यः स्यात्तत्तेनालोच्य सर्वथा । आरब्धव्यमुपायेन, सम्यगेष सतां नयः ॥ ३३ ॥**

तस्मात्कारणाद्यो-यतिः यस्य-सापेक्षनिरपेक्षयतिधर्मयोरन्यतरानुष्ठानस्य 'योग्यः' समुचितः 'स्याद्' भवेत् 'तद्' अनुष्ठानं 'तेन' योग्येन 'आलोच्य' निपुणोहापोहयोगेन परिभाव्य 'सर्वथा' सर्वैरुपाधिभिरारब्धव्यम्-आरम्भणीयं उपायेन तद्गतेनैव 'सम्यग्' यथावत् 'एष' योग्यारम्भलक्षणः 'सतां' शिष्टानां 'नयो' नीतिरिति ॥३॥

**इत्युक्तो यतिधर्मः, इदानीमस्य विषयविभागमनुवर्णयिष्याम इति ॥ १ ॥ (३६८)**

प्रतीतार्थमेवेति

**तत्र कल्याणाशयस्य श्रुतरत्नमहोदधेः उपशमादिलब्धिमतः परहितोद्यतस्य अत्यन्तगंभीरचेतसः प्रधानपरिणतेर्विधूतमोहस्य परमसत्त्वार्थकर्त्तुः सामायिकवतः विशुद्ध्यमानाशयस्य यथोचितप्रवृत्तेः सात्मीभूतशुभयोगस्य श्रेयान् सापेक्षयतिधर्म एवेति ॥ २ ॥ (३६९)**

'तत्रे'ति विषयविभागानुवर्णनोपक्षेपे 'कल्याणाशयस्य' भावारोग्यरूपमुक्तिपुरप्रापकपरिणामस्य 'श्रुतरत्नमहोदधेः' प्रवचनमाणिक्यपरमनीरनिधेः, 'उपशमादिलब्धिमतः' उक्तलक्षणोपशमादिलब्धिसमन्वितस्य 'परहितोद्यतस्य' सर्वजगज्जीवजातहिताधानधनस्य 'अत्यन्तगम्भीरचेतसः' हर्षविषादादावतिनिपुणैरप्यनुपलब्धचित्तविकारस्य

न्मना–प्रादुर्भावेन, मृत्युना–मरणेन, जरया-स्थविरभावलक्षणया, व्याधिना–कुष्ठादिरूपेण, शोकेन-इष्टवियोगप्रभवमनोदुःखविशेषेण आदिशब्दाच्छीतवातादिभिरुपद्रवैरुपद्रुतात्–विह्वलतामानीतादिति ॥३॥ इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ यतिधर्मविधिः नाम पञ्चमोऽध्यायः ॥५॥

## अथ षष्ठोऽध्यायः

व्याख्यातः पञ्चमोऽध्यायः, अधुना षष्ठो व्याख्यायते, तस्येदमादिसूत्रम्—

आशयाद्युचितं ज्यायोऽनुष्ठानं सूरयो विदुः। साध्यसिध्ध्यङ्गमित्यस्माद्यतिधर्मो द्विधा मतः ॥ ३१ ॥

आशयस्य–चित्तवृत्तिलक्षणस्य आदिशब्दात् श्रुतसंपत्तेः शरीरसंहननस्य परोपकारणकरणशक्तेश्च उचितं–योग्यं ज्यायः-अतिप्रशस्यमनुष्ठानं–जिनधर्मसेवालक्षणं 'सूरयः' समयज्ञाः 'विदुः'जानन्ति, कीदृशमित्याह–'साध्यसिध्ध्यङ्गं' साध्यस्य-सकलक्लेशक्षयलक्षणस्य सिध्ध्यङ्गं-निष्पत्तिकारणं इति–अस्मात्कारणाद्यतिधर्मो द्विधा मतः, सापेक्षयतिधर्मतया निरपेक्षयतिधर्मतया चेति ॥ १ ॥ साध्यसिध्ध्यङ्गत्वमेव भावयति—

समग्रा यत्र सामग्री, तदक्षेपेण सिद्धयति। दवीयसाऽपि कालेन, वैकल्ये तु न जातुचित् ॥ ३२ ॥

'समग्रा' परिपूर्णा यत्र कार्ये 'सामग्री' समग्रसंयोगलक्षणा भवति तत्कार्यं 'अक्षेपेण' अविलम्बेन 'सि-

'संभवति' जायते 'तद्वतोऽपि' अनाभोगमात्रादनुचितप्रतिपत्तिमतोऽपि, किंपुनस्तदन्यस्येत्यपिशब्दार्थः, चारित्रं-सर्वविरतिरूपम् ॥१९॥ अत्रैव विशेषमाह—

अनभिनिवेशवांस्तु तद्युक्तः खल्वतत्त्वे ॥ २० ॥ (३८७)

'अनभिनिवेशवान्' निराग्रहः पुनस्तद्युक्तो जीवोऽनाभोगेऽपि 'खलु' निश्चयेन 'अतत्त्वे' प्रवचनबाधितार्थे ॥२०॥ एतदपि कुत इत्याह—

स्वस्वभावोत्कर्षादिति ॥ २१ ॥ (३८८)

स्वस्य-अनौपाधिकत्वेन निजस्य स्वभावस्य-आत्मतत्त्वस्य उत्कर्षात्-वृद्धेः, चारित्रिणो हि जीवस्य छद्मस्थतया क्वचिदर्थे अनाभोगेऽपि गौतमादिमहामुनीनामिव तथाविधात्यन्तिकबाधककर्माभावेन स्वस्वभावः-सम्यग्दर्शनादिरूपो नापकर्षं प्रतिपद्यत इति ॥२१॥ अयमपि कुत इत्याह—

मार्गानुसारित्वादिति ॥ २२ ॥ (३८९)

मार्गस्य-सम्यग्दर्शनादेर्मुक्तिपथस्यानुवर्त्तनात् ॥२२॥ तदपि—

तथा रुचिस्वभावत्वादिति ॥ २३ ॥ (३९०)

तथा-तत्प्रकारा मार्गानुरूपत्वेन या रुचिः-श्रद्धा तद्रूपत्वात् ॥२३॥ एतदपि—

श्रवणादौ प्रतिपत्तेरिति ॥ २४ ॥ (३९१)

लाया निर्जरायाः, कुत इत्याह—'उक्तविपर्ययात्' उदग्रविवेकाभावेन रत्नत्रयाराधनाभावादिति ॥१५॥ एतदेव भावयन्नाह—

निर्वाणफलमत्र तत्त्वतोऽनुष्ठानमिति ॥ १६ ॥ (३८३)

'निर्वाणफलं' मुक्तिकार्यम् 'अत्र' जिनवचने 'तत्त्वतः' परमार्थवृत्त्या अनुषङ्गतः स्वर्गादिफलभावेऽपि 'अनुष्ठानं' सम्यग्दर्शनाद्याराधनारूपं प्रोच्यत इति ॥१६॥ यदि नामैवं ततोऽपि किमित्याह—

न चासदभिनिवेशवत्तदिति ॥ १७ ॥ (३८४)

'न च' नैव असुन्दराग्रहयुक्तं 'तत्' निर्वाणफलमनुष्ठानं, असदभिनिवेशो हि निष्ठुरेऽपि अनुष्ठाने मोक्षफलं प्रतिबध्नातीति तद्व्यवच्छेदार्थमुक्तं 'न चासदभिनिवेशवत्तदि'ति ॥१७॥ नन्वनौचित्येऽप्यनुष्ठानं च भविष्यति मिथ्याभिनिवेशरहितं चेत्याशङ्कयाह—

अनुचितप्रतिपत्तौ नियमादसदभिनिवेशोऽन्यत्रानाभोगमात्रादिति ॥ १८ ॥ (३८५)

अनुचितस्यानुष्ठानस्य प्रतिपत्तौ—अभ्युपगमे 'नियमाद्' अवश्यंतया 'असदभिनिवेशः' उक्तरूपः, असदभिनिवेशकार्यत्वादनुचितानुष्ठानस्य, अपवादमाह—'अन्यत्र अनाभोगमात्रादि'ति अन्यत्र—विनाऽनाभोग एव—अपरिज्ञानमेव केवलम्—अभिनिवेशशून्यमनाभोगमात्रं तस्मादनाभोगमात्रादनुचितप्रतिपत्तावपि नासदभिनिवेश इति ॥१८॥ एवं सति किं सिद्धमित्याह—

संभवति तद्वतोऽपि चारित्रमिति ॥ १९ ॥ (३८६)

करणीयानशनक्रियातुल्य इत्यर्थः, 'श्रेयान्' अतिप्रशस्यः 'निरपेक्षयतिधर्मो' जिनकल्पादिर्ग्रन्थप्रसिद्धस्वरूपो वर्त्तत इति ॥

तथा–तत्कल्पस्य च परं परार्थलब्धिविकलस्येति ॥ १२ ॥ ( ३७९ )

'तत्कल्पस्य' निरपेक्षयतिधर्मप्रतिपत्तिसमर्थपुरुषविशेषतुल्यस्य अन्यस्यापि, चशब्दः समुच्चये, परं–केवलं 'परार्थलब्धिविकलस्य' तथाविधान्तरायादिकर्मपारतन्त्र्यदोषात् परार्थलब्ध्या–साधुशिष्यनिष्पादनादिसामर्थ्यलक्षणया विकलस्य, श्रेयान् निरपेक्षयतिधर्म इत्यनुवर्त्तते ॥१२॥ अत्र हेतुमाह–

उचितानुष्ठानं हि प्रधानं कर्मक्षयकारणमिति ॥ १३ ॥ (३८०)

उचितानुष्ठानं 'हिः' यस्मात् 'प्रधानम्' उत्कृष्टं कर्मक्षयकारणमिति ॥१३॥ एतदपि कुत इत्याह–

उदग्रविवेकभावाद्रत्नत्रयाराधनादिति ॥ १४ ॥ ( ३८१ )

उदग्रस्य–उत्कटस्य विवेकस्य–विधेयाविधेयवस्तुविभागविज्ञानलक्षणस्य भावात्सकाशात्, किमित्याह–रत्नत्रयस्य–सम्यग्दर्शनादेः आराधनात्–निष्पादनात्, उचितानुष्ठाने हि प्रारब्धे नियमाद्रत्नत्रयाराधक उदग्रो विवेको विजृम्भते इत्येवमुपधानं कर्मक्षयकारणमिति ॥१४॥ अत्रैव व्यतिरेकमाह–

अननुष्ठानमन्यदकामनिर्जराङ्गमुक्तविपर्ययादिति ॥ १५ ॥ (३८२)

'अननुष्ठानं' अनुष्ठानमेव न भवति 'अन्यत्' विलक्षणं उचितानुष्ठानात्, तर्हि कीदृशं तदित्याह–'अकामनिर्जराङ्गं' अकामस्य–निरभिलाषस्य तथाविधबलीवर्दादेरिव या निर्जरा–कर्मक्षपणा तस्या अङ्गं–निमित्तं, नतु मुक्तिफ-

निरपेक्षयतिधर्मोचितादन्यस्य साधोः परार्थसिद्धिसंपादकस्याभावे प्रतिपत्तिप्रतिषेधाद्-अङ्गीकरणनिवारणात्, चकारो हेत्वंतरसमुच्चये, तस्यैव च गुरुत्वमिति संटण्क इति ॥१०॥ इत्थं सापेक्षयतिधर्मयोग्यमुक्त्वा निरपेक्षयतिधर्मयोग्यं वक्तुमाह-

**नवादिपूर्वधरस्य तु यथोदितगुणस्यापि साधुशिष्यनिष्पत्तौ साध्यान्तराभावतः सति कायादिसामर्थ्ये सद्वीर्याचारासेवनेन तथा प्रमादजयाय सम्यगुचितसमये आज्ञाप्रामाण्यतस्तथैव योगवृद्धेः प्रायोपवेशनवच्छ्रेयान्निरपेक्षयतिधर्म इति ॥ ११ ॥ ( ३७८ )**

नवादिपूर्वधरस्य तु यथोदितगुणस्यापि, 'तत्र कल्याणाशयस्ये'त्यादिसूत्रनिरूपितगुणस्य, किं पुनस्तदन्यगुणस्येत्यपिशब्दार्थः, 'साधुशिष्यनिष्पत्तौ' आचार्योपाध्यायप्रवर्त्तकस्थविरगणावच्छेदकलक्षणपदपञ्चकयोग्यतया साधूनां शिष्याणां निष्पत्तौ सत्यां 'साध्यान्तराभावतः' साध्यान्तरस्य-निरपेक्षधर्मापेक्षया आचारपरिपालनादिरूपस्य अभावतः-अभवनेन 'सति' विद्यमाने 'कायादिसामर्थ्ये' वज्रर्षभनाराचसंहननशरीरतया वज्रकुड्यसमानधृतितया च महति कायमनसोः समर्थभावे सति 'सद्वीर्याचारासेवनेन' सतो-विषयप्रवृत्ततया सुन्दरस्य वीर्याचारस्य-सामर्थ्यागोपनलक्षणस्य निषेवणेन 'तथा प्रमादजयाय' तथा-तेन निरपेक्षयतिधर्मप्रतिपत्तिप्रकारेण यः प्रमादस्य-निद्रादेः जयः-अभिभवस्तदर्थं सम्यक्-शास्त्रोक्तनीत्या तपः सत्त्वसूत्रैकत्वबललक्षणाभिः पञ्चभिस्तुलनाभिरात्मानं तोलयित्वा 'उचितसमये' तिथिवारनक्षत्रयोगलग्नशुद्धिलक्षणे 'आज्ञाप्रामाण्यतः' आज्ञैवात्रार्थे प्रमाणमिति परिणामात् 'तथैव' प्रतिपित्सितनिरपेक्षयतिधर्मानुरूपतयैव 'योगवृद्धेः' सम्यग्दर्शनज्ञानचारित्रलक्षणधर्मव्यापारवृद्धेः 'प्रायोपवेशनवत्' प्रायोपवेशनम्-अनशनं तद्वत्, पर्यन्तकाल-

जीवाकयकार्द्रचर्मशिरोवेष्टनाविष्टसुवर्णकारारब्धमारणमहामुनिमेतार्य इवाद्यापि महासत्त्वाः केचन दृश्यन्ते 'अन्यरक्षादौ' अन्यस्य-स्वव्यतिरिक्तस्य रक्षायां-मरणादित्राणरूपायां, आदिशब्दादुपकारे च मार्गश्रद्धानाद्यारोपणरूपे, इतिशब्दो वाक्यपरिसमाप्तौ ॥ ३६ ॥ निगमयन्नाह–

इति मुमुक्षोः सर्वत्र भावनायामेव यत्नः श्रेयानिति ॥ ३७ ॥ ( ४०४ )

'इति' एवमुक्तयुक्तेः 'मुमुक्षोः' यतेः सर्वत्र कृत्ये भावनायामेव–उक्तलक्षणायां 'यत्नः'-आदरः, 'श्रेयान्'-प्रशस्यः ॥ ३७ ॥ कुत इत्याह—

तद्भावे निसर्गत एव सर्वथा दोषोपरतिसिद्धेरिति ॥ ३८ ॥ ( ४०५ )

'तद्भावे' भावनाभावे 'निसर्गत एव' स्वभावादेव सर्वैः प्रकारैर्दोषाणां-रागादीनां उपरतिसिद्धेः ॥ ३८ ॥ अथ भावनाया एव हेतुमाह–

वचनोपयोगपूर्वा विहितप्रवृत्तिर्योनिरस्या इति ॥ ३९ ॥ ( ४०६ )

वचनोपयोगः-शास्त्रे इदमित्थं चेत्थं चोक्तमित्यालोचनारूपः पूर्वा-मूलं यस्याः सा तथा, का इत्याह-विहिते-प्रत्युपेक्षणादौ प्रवृत्तिर्विहितप्रवृत्तिः 'योनिः' उत्पत्तिस्थानं 'अस्याः' भावनाया भावनाज्ञानस्येत्यर्थः ॥३९॥ कुत इत्याह–

महागुणत्वाद्वचनोपयोगस्येति ॥ ४० ॥ ( ४०७ )

अत्यन्तोपकारित्वाद्वचनोपयोगस्य-उक्तरूपस्य ॥४०॥ एतदेव भावयन्नाह–

एतदपि कुत इत्याह—

दृष्टवदपायेभ्योऽनिवृत्तेरिति ॥ ३३ ॥ (४००)

यथा भावनाज्ञानेन दृष्टेभ्य उपलक्षणत्वाद् ज्ञातेभ्यश्चानर्थेभ्यो निवर्त्तते एवं श्रुतमयप्रज्ञाप्रवृत्तावप्यपायेभ्योऽनिवृत्तेः—अनिवर्त्तनात् ॥३३॥ ननु भावनाज्ञानेऽप्यपायेभ्यो निवृत्तिरसंभविनीत्याह—

एतन्मूले च हिताहितयोः प्रवृत्तिनिवृत्ती इति ॥ ३४ ॥ (४०१)

'एतन्मूले च' भावनाज्ञानपूर्विके एव, चकारस्यैवार्थत्वात्, हिताहितयोः प्रतीतयोः यथासंख्यं 'प्रवृत्तिनिवृत्ती' विधिप्रतिषेधरूपे भवतः प्रतिमतां, नान्यज्ञानमूले इति ॥३४॥ इदमेवोपचिन्वन्नाह—

अत एव भावनादृष्टज्ञाताद्विपर्ययायोग इति ॥ ३५ ॥ (४०२)

'अत एव' भावनामूलत्वादेव हिताहितप्रवृत्तिनिवृत्त्योः 'भावनादृष्टज्ञाताद्' भावनया दृष्टं ज्ञातं च वस्तु प्राप्य 'विपर्ययायोगः' विपर्यासाप्रवृत्तिलक्षणो जायते, यतो न मतिविपर्यासमन्तरेण पुंसो हितेष्वप्रवृत्तिरहितेषु च प्रवृत्तिः स्यात्, न चासौ भावनाज्ञाने समस्तीति ॥ ३५ ॥ एतदपि कथं सिद्धमित्याह—

तद्वन्तो हि दृष्टापाययोगेऽप्यदृष्टापायेभ्यो निवर्त्तमाना दृश्यन्त एवान्यरक्षादाविवेतीति ॥ ३६ ॥ (४०३)

'तद्वन्तो' भावनाज्ञानवन्तः-प्रमातारो 'हिः'-यस्मात् 'दृष्टापाययोगेऽपि' प्रत्यक्षोपलभ्यमानमरणाद्यपायप्राप्तौ, किं पुनस्तदप्राप्तावित्यपिशब्दार्थः, 'अदृष्टापायेभ्यो' नरकादिगतिप्रापणीयेभ्यो 'निवर्त्तमानाः' सुवर्णमययवभक्षिक्रौञ्च-

घटनात् ॥२९॥ इयमपि कुत इत्याह—

भावनानुगतस्य ज्ञानस्य तत्त्वतो ज्ञानत्वादिति ॥ ३० ॥ ( ३०७ )

इह त्रीणि ज्ञानानि—श्रुतज्ञानं चिन्ताज्ञानं भावनाज्ञानं चेति, तल्लक्षणं चेदम्—" वाक्यार्थमात्रविषयं कोष्ठकगतबीजसं-निभं ज्ञानम् । श्रुतमयमिह विज्ञेयं मिथ्याभिनिवेशरहितमलम् ॥ १९९ ॥ यत्तु महावाक्यार्थजमतिसूक्ष्मसुयुक्तिचिन्तयोपेतम् । उदक इव तैलबिन्दुर्विसर्पि चिन्तामयं तत् स्यात् ॥ २०० ॥ ऐदम्पर्यगतं यद्विध्यादौ यत्नवत् तथैवोच्चैः । एतत्तु भावनामयमशुद्धसद्रत्नदीप्तिसमम् ॥ २०१ ॥ (षोड०) ततो 'भावनानुगतस्य' भावनानुविद्धस्य 'ज्ञानस्य' बोधविशेषस्य 'तत्त्वतः' पारमार्थिकवृत्त्या 'ज्ञानत्वाद्' अवबोधत्वात् ॥३०॥ एतदेव व्यतिरेकतः साधयन्नाह—

न हि श्रुतमय्या प्रज्ञया, भावनादृष्टज्ञातं ज्ञातं नामेति ॥ ३१ ॥ ( ३०८ )

'न' नैव 'हिः' यस्मात् 'श्रुतमय्या' प्रथमज्ञानरूपया 'प्रज्ञया' बुद्ध्या कर्तृभूतया करणभूतया वा, 'भावना-दृष्टज्ञातं' भावनया—भावनाज्ञानेन दृष्टं सामान्येन ज्ञातं च विशेषेण भावनादृष्टज्ञातं वस्तु 'ज्ञातम्' अवबुद्धं भवति, नामेति विद्वज्जनप्रकटमेतत्, अयमभिप्रायः—यादृशं भावनाज्ञानेन वस्तु दृश्यते ज्ञायते च न तथा श्रुतज्ञानेनेति ॥ ३१ ॥ कुत इत्याह—

उपरागमात्रत्वादिति ॥ ३२ ॥ ( ३०९ )

उपराग एव केवल उपरागमात्रं तद्भावस्तत्त्वं तस्मात्, यथा हि स्फटिकमणेर्जपाकुसुमादिसंनिधानत उपराग एव, न पुनस्तद्भावपरिणतिः संपद्यते, एवं श्रुतमय्यां प्रज्ञायां आत्मनो बोधमात्रमेव बहिरङ्गं, न त्वन्तः परिणतिरिति ॥ ३२ ॥

स्वयमेव शास्त्रश्रवणे आदिशब्दादन्येन वा प्रेरणायां कृतायां 'प्रतिपत्तेः' अनाभोगेन विहितं मयेदमसुन्दरमनुष्ठानमित्यङ्गीकरणात् ॥२४॥ इयमपि—

असदाचारगर्हणादिति ॥ २५ ॥ (३९२)

असदाचारस्य-अनुचितानुष्ठानस्य गर्हणात्-तदुचितप्रायश्चित्तप्रतिपत्त्या निन्दनात् ॥२५॥ अथ प्रस्तुतमेव निगमयन्नाह—

इत्युचितानुष्ठानमेव सर्वत्र श्रेय इति ॥ २६ ॥ (३९३)

'इति' एवं अनुचितानुष्ठाने नियमादसदभिनिवेशभावात् उचितानुष्ठानमेव 'सर्वत्र' गृहस्थधर्मप्रतिपत्तौ यतिधर्मप्रतिपत्तौ च 'श्रेयः' प्रशस्यं वर्त्तते ॥२६॥ कुत इत्याह—

भावनासारत्वात्तस्येति ॥ २७ ॥ ( ३९ ४

भावना-निरुपाधिको जीववासकः परिणामः, ततो भावना सारं-प्रधानं यत्र तत्तथा तद्भावस्तत्त्वं तस्मात् 'तस्य' उचितानुष्ठानस्य ॥२७॥ भावनामेव पुरस्कुर्वन्नाह—

इयमेव प्रधानं निःश्रेयसाङ्गमिति ॥ २८ ॥ ( ३९५ )

'इयमेव' भावना प्रधानं 'निःश्रेयसाङ्गं' निर्वाणहेतुः ॥२८॥ एतदपि कुत इत्याह—

एतत्स्थैर्याद्धि कुशलस्थैर्योपपत्तेरिति ॥ २९ ॥ ( ३९६ )

एतस्या-भावनायाः स्थैर्यात्-स्थिरभावात् 'हिः' स्फुटं कुशलानां-सकलकल्याणाचरणानां स्थैर्यस्य उपपत्तेः—

उचितद्रव्यस्तवस्यापि तद्रूपत्वादिति ॥ ४६ ॥ ( ४१३ )

उचितस्य द्रव्यस्तवस्य " काले सुइभूएणं विसिट्ठपुप्फाइएहिं विहिणा उ । सारथुइथोत्तगरुई जिणपूजा होइ कायवा ॥२०२॥" (पञ्चा. १४७) [काले शुचिभूतेन विशिष्टपुष्पादिकैर्विधिनैव। सारस्तुतिस्तोत्रगुर्वी जिनपूजा भवति कर्त्तव्या ॥१॥] इत्यादिवचनोक्तरूपस्य, किं पुनर्भावस्तवस्येत्यपिशब्दार्थः, सा–उपदेशपालना रूपमस्य तद्भावस्तत्त्वं तस्मात् ॥ कुत इत्याह–

भावस्तवाङ्गतया विधानादिति ॥ ४७ ॥ ( ४१४ )

शुद्धयतिधर्मकारणतया विधानाद् द्रव्यस्तवस्य, यदा हि विषयपिपासादिभिः कारणैः साधुधर्ममन्दिरशिखरमारोढुमक्षमो धर्मं च चिकीर्षुः प्राणी तदा महतः सावद्यान्तरात् निवृत्तेरुपायमन्यमपश्यन् भगवान् अर्हन् सदारम्भरूपं द्रव्यस्तवमुपदिदेश, यथा–" जिनभवनं जिनबिम्बं जिनपूजां जिनमतं च यः कुर्यात् । तस्य नरामरशिवसुखफलानि करपल्लवस्थानि ॥ २०३ ॥ (प्रशम.) एवं च द्रव्यस्तवोऽपि भगवदुपदेशपालनारूप एवेति भावः ॥४७॥ अथ भगवति चित्तावस्थिते फलमाह–

हृदि स्थिते च भगवति क्लिष्टकर्मविगम इति ॥ ४८ ॥ ( ४१५ )

प्रतीतार्थमेव, परं क्लिष्टकर्म तदुच्यते यत्संसारप्रारम्भकनिबन्धनमिति ॥४८॥ एतदपि कुत इत्याह–

जलानलवदनयोर्विरोधादिति ॥ ४९ ॥ ( ४१६ )

वारिवैश्वानरयोरिव 'अनयोः' भगवच्चित्तावस्थानक्लिष्टकर्मणोः 'विरोधात्' परस्परबाधनात् ॥४९॥ पुनरपि भक्तोपसंहारमाह—

**तत्र ह्यचिन्त्यचिन्तामणिकल्पस्य भगवतो बहुमानगर्भं स्मरणमिति ॥ ४१ ॥ ( ४०८ )**

'तत्र' वचनोपयोगे सति 'हिः' यस्मादचिन्त्येन–चिन्तयितुमशक्यप्रभावेण चिन्तामणिना–मणिविशेषेण कल्पस्य–तुल्यस्य 'भगवतः' पारगतस्य 'बहुमानगर्भं' प्रीतिसारं 'स्मरणम्' अनुध्यानं जायते ॥ ४१ ॥ कथमित्याह–

**भगवतैवमुक्तमित्याराधनायोगादिति ॥ ४२ ॥ ( ४०९ )**

'भगवता' अर्हता 'एवं' क्रियमाणप्रकारेण 'उक्तं' निरूपितं प्रत्युपेक्षणादि 'इति' अनेन रूपेण 'आराधनायोगाद्' अनुकूलभावभजनेनेति ॥ २॥ एवं सति यत् सिद्धं तदाह–

**एवं च प्रायो भगवत एव चेतसि समवस्थानमिति ॥ ४३ ॥ (४१०)**

'एवं च' एतस्मिंश्च बहुमानगर्भे भगवत्स्मरणे सति 'प्रायो' बाहुल्येन भगवत एव चेतसि 'समवस्थानं' निवेशनं, प्रायोग्रहणं च क्रियाकाले क्रियायामेव चित्तावस्थानं विधेयं, अन्यथा तत्क्रियाया द्रव्यत्वप्रसङ्गादिति सूचनार्थमिति ॥ ४३ ॥ ननु तदुक्तकरणात् किं नाम सिध्यतीत्याह–

**तदाज्ञाऽऽराधनाच्च तद्भक्तिरेवेति ॥ ४४ ॥ ( ४११ )**

तस्य–भगवत आज्ञाऽऽराधनात् पुनः 'तद्भक्तिरेव' भगवद्भक्तिरेवेति ॥ ४४ ॥ एतदपि भावयितुमाह–

**उपदेशपालनैव भगवद्भक्तिः, नान्या, कृतकृत्यत्वादिति ॥ ४५ ॥ ( ४१२ )**

प्रकटार्थमेतदिति ॥४५॥ एवं तर्हि कथमस्य पुष्पादिपूजाविधिरित्याशङ्क्याह–

परमार्थतः ‘तत्त्वात्’ आर्तध्यानत्वात्, व्यवहारतस्तु धर्मध्यानत्वमपि इति तत्त्वग्रहणमिति ॥५५॥ ननु अनुत्सुकः प्रवृत्तिकालमपि कथं लप्स्यते इत्याशङ्क्याह—

नेदं प्रवृत्तिकालसाधनमिति ॥ ५६ ॥ ( ४२३ )

‘न’ नैवेदम्—औत्सुक्यं ‘प्रवृत्तिकालसाधनं’ कार्यस्य यः प्रवृत्तिकालः—प्रस्तावलक्षणः तस्य साधनं—हेतुः, अनवसरोपहतत्वात्, नहि अत्यन्तं बुभुक्षवोऽपि पुरुषा अप्रस्तावे भोजनं लभन्ते, किंतु प्रस्ताव एवेति ॥ ५६ ॥ अतः किं विधेयमित्याह—

इति सदोचितमिति ॥ ५७ ॥ ( ४२४ )

‘इति’ एवं ‘सदा’ सर्वकालमुचितमारब्धव्यं निरुत्सुकेन सता ॥५७॥ कुत इत्याह—

तदा तदसत्त्वादिति ॥ ५८ ॥ ( ४२५ )

‘तदा’ प्रवृत्तिकाले तस्य-औत्सुक्यस्यासत्त्वाद्—अभावात्, नहि सम्यगुपायप्रवृत्ता मतिमन्तः कार्यौत्सुक्यमवलम्बन्ते, सदुपायस्य कार्यमप्रसाध्योपरमाभावात्, ततो यो यस्य साधनभावेन व्याप्रियते स तत्कार्यप्रवृत्तिकाले नियमात्स्वसत्त्वमादर्शयति, यथा मृत्पिण्डादिर्घटस्य, नादर्शयति चात्मानमौत्सुक्यं कार्यप्रवृत्तिकाले मतिमतामिति कथं तत् तत्साधनभावं लब्धुमर्हतीति, अत एव पठ्यतेऽन्यत्र—“ अत्वरापूर्वकं सर्वं, गमनं कृत्यमेव वा । प्रणिधानसमायुक्तमपायपरिहारतः ॥२०४॥ ” ॥ ५८ ॥ यदि नौत्सुक्यं प्रवृत्तिकालसाधनं तर्हि किं साधनमित्याशङ्क्याह—

इत्युचितानुष्ठानमेव सर्वत्र प्रधानमिति ॥ ५० ॥ ( ४१७ )

एतत्प्राग्वत् ॥५०॥ कथमेतदित्याह–

प्रायोऽतिचारासंभवादिति ॥ ५१ ॥ ( ४१८ )

यो हि स्वोचितं कर्म कर्त्तुमारभते न तस्य तत्रातिचारः संभवति, प्रायोग्रहणेन चेदमाह-तथाविधानाभोगदोषात् निकाचितक्लिष्टकर्मोदयाद्वा कदाचित्कस्यचित्तथाविधसन्मार्गयायिनः पथिकस्येव कण्टकज्वरदिग्मोहसमानोऽतिचारः स्यादपीति ॥ ५१ ॥ एतदपि कथमित्याह–

यथाशक्ति प्रवृत्तेरिति ॥ ५२ ॥ ( ४१९ )

'यथाशक्ति' यथासामर्थ्यं सर्वकार्येषु प्रवृत्तेः ॥५२॥ इयमपि कथम् ?, उच्यते–

सद्भावप्रतिबन्धादिति ॥ ५३ ॥ ( ४२० )

सद्भावे–शक्यतया सत्यरूपे कृत्येऽर्थे चित्तस्य प्रतिबन्धात्–प्रतिबद्धत्वात् ॥ ५३ ॥ विपर्यये बाधकमाह–

इतरथाऽऽर्त्तध्यानोपपत्तिरिति ॥ ५४ ॥ ( ४२१ )

'इतरथा' अनुचितारम्भे 'आर्त्तध्यानस्य' प्रतीतरूपस्य 'उपपत्तिः' प्रसङ्गः स्यात् ॥५४॥ कथमित्याह–

अकालौत्सुक्यस्य तत्त्वतस्तत्त्वादिति ॥ ५५ ॥ ( ४२२ )

अकाले–चिकीर्षितकार्याप्रस्तावे यदौत्सुक्यं–तत्कालोचितकार्यान्तरपरिहारेण तीव्रचिकीर्षालक्षणं तस्य 'तत्त्वतः'

धीयते तथा चारित्रवतोऽपि जन्तोः तथाविधवीर्यह्रासात् परिणाममन्दतायां नत्तीव्रताऽऽधानार्थमुपदेशः प्रवर्त्तते इति ॥६७॥
अथोपदेशनिष्फलत्वमभिधातुमाह–

माध्यस्थ्ये तद्वैफल्यमेवेति ॥ ६८ ॥ ( ४३५ )

'माध्यस्थ्ये' मध्यस्थभावे अप्रवृत्तिप्रवृत्त्यवसानयोर्मध्यभागरूपे, प्रवृत्तौ सत्यामित्यर्थः, तस्य-उपदेशस्य वैफल्यं-विफलभावः ॥६८॥ कुत इत्याह–

स्वयंभ्रमणसिद्धेरिति ॥ ६९ ॥ ( ४३६ )

स्वयम्-आत्मनैव भ्रमणसिद्धेः-चक्रभ्रमणतुल्यप्रवृत्तिसिद्धेः ॥६९॥ एतदेव भावयन्नाह–

भावयतिर्हि तथा कुशलाशयत्वादशक्तोऽसमञ्जसप्रवृत्तावितरस्यामिवेतर इति ॥ ७० ॥ ( ४३७ )

'भावयतिः' परमार्थसाधुः हिः-यस्मात् 'तथा' तत्प्रकारश्चारित्रवृद्धिहेतुरित्यर्थः कुशलः-परिशुद्धः आशयः-चित्तमस्य तद्भावस्तत्त्वं तस्माद् अशक्तः--असमर्थोऽसमंजसप्रवृत्तौ अनाचारसेवारूपायां, दृष्टान्तमाह–'इतरस्यामिव' भावतः समञ्जसप्रवृत्ताविव 'इतरः' अभावयतिर्विडम्बकप्रायः ॥६९॥ अत्रैव किञ्चिद्विशेषमाह–

इति निदर्शनमात्रमिति ॥ ७१ ॥ ( ४३८ )

'इति' एतदितरस्यामिवेतर इति यदुक्तं तन्निदर्शनमात्रं–दृष्टान्त एव केवलः ॥७१॥ अत एवाह–

न सर्वसाधर्म्ययोगेनेति ॥ ७२ ॥ ( ४३९ )

वले सर्वत्र प्रवर्त्तनं च शक्त्या । निजलाभचिन्तनं अनुग्रहः सदा मैत्री गुरुवचने ॥ २ ॥ संवरनिश्छिद्रत्वं षड्जीवरक्षणं सुपरिशुद्धम् । विधिस्वाध्यायो मरणाद्यपेक्षणं यतिजनोपदेशः ॥ ३ ॥ ] ॥ ६५ ॥ इत्याशङ्क्याह—

चारित्रिणां तत्साधनानुष्ठानविषयस्तूपदेशः, प्रतिपात्यसौ, कर्मवैचित्र्यादिति ॥ ६६ ॥ ( ४३३ )

चारित्रिणां-परिणतचारित्राणां तस्य—चारित्रपरिणामस्य साधनानि यान्यनुष्ठानानि—गुरुकुलवासादीनि तानि विषयो यस्य स तथा, तुः पुनरर्थे, 'उपदेशः' प्रवर्त्तकवाक्यरूपो यः शास्त्रेषु गीयते; स 'प्रतिपाती' प्रतिपतनशीलः यतोऽसौ चारित्रपरिणामो वर्त्तते, कुत इत्याह—कर्मवैचित्र्यात्, विचित्राणि हि कर्माणि ततस्तेभ्यः किं न संभाव्यते ?, यतः पठ्यते-कम्माइं नूणं घणचिक्कणाइं कढिणाइं वज्जसाराइं। णाणड्ढयपि पुरिसं पंथाओ उप्पहं नेंति ॥२०९॥' [कर्माणि नूनं घनचिक्कणानि कठिनानि वज्रसाराणि। ज्ञानाढ्यमपि पुरुषं पथ उत्पथं नयन्ति ॥ १ ॥ ] ततः पतितोऽपि कदाचित्कस्यचित् चारित्रपरिणामः तथाविधाकर्षवशात् पुनरपि गुरुकुलवासादिभ्यः सम्यक्प्रयुक्तेभ्यः प्रवर्त्तत इति तत्साधनोपदेशो ज्यायानिति ॥६६॥

तत्संरक्षणानुष्ठानविषयश्च चक्रादिप्रवृत्त्यवसानभ्रमाधानज्ञातादिति ॥ ६७ ॥ ( ४३४ )

तस्य—चारित्रपरिणामस्य लब्धस्य यत् संरक्षणं—पालनं तदर्थं यदनुष्ठानं तद्विषयः, चः समुच्चये, उपदेशः—"वज्जेज्जा संसग्गिं पासत्थाईहिं पावमित्तेहिं। कुज्जा उ अप्पमत्तो सुद्धचरित्तेहिं धीरेहिं ॥ २१० ॥" (पञ्चव. ७३०) [ वर्जयेत् संसर्गी पार्श्वस्थादिभिः पापमित्रैः । कुर्यादप्रमत्त एव शुद्धचारित्रैर्धीरैः ॥ १ ॥ ] इत्यादिरूपो यः स चक्रस्य—कुलालादिसंबन्धिनः आदिशब्दादरघट्टयन्त्रादेश्च या प्रवृत्तिः-भ्रमणरूपा तस्या अवसाने—मन्दतारूपे यद् भ्रमाधानं—पुनरपि दण्डयोगेन तीव्रतरमा-

'यतिधर्माधिकारः' शुद्धसाधुधर्मप्रस्तावः पुनरयं-प्रक्रान्तः 'इति' एतस्माद्धेतोः 'प्रतिषेधो' निवारणं प्रवृत्तिमात्रस्य, नहि यथा कथञ्चित् प्रवृत्तः सर्वोऽपि प्राणी भावधर्मप्रवृत्तिकालाराधको भवति, किन्तु घुणाक्षरवृत्त्या कश्चिदेवेति सर्वत्रौचित्येन प्रवर्तितव्यम् ॥६२॥ अभ्युच्चयमाह–

न चैतत् परिणते चारित्रपरिणाम इति ॥ ६३ ॥ (४३०)

'न च' नैव 'एतद्' अकालौत्सुक्यं 'परिणते' अङ्गाङ्गीभावमागते चारित्रपरिणामे ॥६३॥ कुत इत्याह–

तस्य प्रसन्नगम्भीरत्वादिति ॥ ६४ ॥ (४३१)

'तस्य' चारित्रपरिणामस्य प्रसन्नत्वात्, शारदसमयसरःसलिलवत्, तथा गम्भीरत्वात् महासमुद्रमध्यवत् ॥ ६४ ॥ एतदपि कथमित्याह—

हिताववहत्वादिति ॥ ६५ ॥ (४३२)

एकान्तेनैव हितकारित्वात् ॥ आह–यदि परिणतश्चारित्रपरिणामः प्रसन्नो गम्भीरस्तथा हितावहश्च तत्कथं तैस्तैर्वचनैस्तत्प्रतिपत्तावपि साधूनामनुशासनं शास्त्रेषु निरूप्यते? यथा-"गुरुकुलवासो गुरुतंतया य उचियविणयस्स करणं च। वसहीपमज्जणाइसु जत्तो तह कालविक्खाए ॥२०६॥ अनिगूहणा वलंमी सवत्थ पवत्तणं च सत्तीए। नियलाभचिंतणं सइ अणुग्गहो मित्ति गुरुवयणे ॥२०७॥ संवरनिच्छिद्दत्तं छज्जीवणरक्खणासुपरिसुद्धं। विहिसज्झाओ मरणादवेक्खणं जइजणुवएसो ॥२०८॥ [गुरुकुलवासो गुरुतन्त्रता चोचितविनयस्य करणं च। वसतिप्रमार्जनादिषु यत्नस्तथा कालावेक्षणे॥१॥ अनिगूहना

**प्रभूतान्येव तु प्रवृत्तिकालसाधनानीति ॥ ५९ ॥ ( ४२६ )**

'प्रभूतान्येव तु' बहून्येव न पुनरेकं किञ्चन प्रवृत्तिकालसाधनानि सन्तीति ॥५९॥ कुत इत्याह–

**निदानश्रवणादेरपि केषांचित्प्रवृत्तिमात्रदर्शनादिति ॥ ६० ॥ ( ४२७ )**

इह निदानशब्दः कारणमात्रपर्यायः, यथा किमत्र रोगे निदानमित्यादौ प्रयोगे, ततो निदानस्य–भोगादिफलत्वेन दानादेः श्रवणाद् देशनायां, यथा –" भोगा दानेन भवन्ति देहिनां सुरगतिश्च शीलेन। भावनया च विमुक्तिस्तपसा सर्वाणि सिध्यन्ति ॥ २०५ ॥ " आदिशब्दात्तथाविधश्रुतादिलिप्सास्वजनोपरोधबलात्कारादेः कारणात् केषाञ्चित् गोविन्दवाचक-सुन्दरीनन्दा-र्यसुहस्तिदीक्षितद्रमक-भवदेव-करोटकगणिप्रभृतीनां प्रवृत्तिमात्रस्य-प्रवृत्तेरेव केवलायाः तात्त्विकोपयोगशून्यायाः प्रथमं प्रव्रज्यायां दर्शनात्–शास्त्रकारैरवलोकनात् ॥६०॥ ननु कथं तत्प्रवृत्तिमात्रं सद् भावप्रव्रज्याप्रतिपत्तिकालहेतुरित्याशङ्क्याह-

**तस्यापि तथापारम्पर्यसाधनत्वमिति ॥ ६१ ॥ ( ४२८ )**

'तस्यापि' प्रवृत्तिमात्रस्य, किं पुनरन्यस्य भववैराग्यादेरित्यपिशब्दार्थः, तथापारम्पर्येण–तत्प्रकारपरम्परया साधनत्वं–साधनभावः, श्रूयते हि केचन पूर्वं तथाविधभोगाभिलाषादिनाऽऽलम्बनेन द्रव्यप्रव्रज्यां प्रतिपद्य पश्चात्तदभ्यासेनैव व्यावृत्ता अतितीव्रचारित्रमोहोदयाभावप्रव्रज्याप्रतिपत्तिकालाराधकाः संजाताः, यथा अमी एव गोविन्दादय इति ॥६१॥ तर्हि प्रवृत्तिमात्रमपि कर्त्तव्यमापन्नमित्याह–

**यतिधर्माधिकारश्चायमिति प्रतिषेध इति ॥ ६२ ॥ ( ४२९ )**

फलं प्रधानं यस्येति स तथा 'आरम्भा' धर्मादिगोचरा प्रवृत्तिः 'इति' अस्याः 'सल्लोकनीतितः' शिष्टजनसमाचारात्, किमित्याह–'संक्षेपात्' परिमितरूपया उक्तमस्य–धर्मस्येदं–फलं "धनदो धनार्थिनां प्रोक्तः" इति श्लोकेन शास्त्रादौ, 'व्यासतो' विस्तरेण पुनरुच्यते इदमिदानीमिति ॥१॥ ननु यदि व्यासतः पुनरिदानीं वक्ष्यते तत्किमिति संक्षेपात् पूर्वं फलमुक्तमित्याशङ्क्याह–

प्रवृत्त्यङ्गमदः श्रेष्ठं, सत्त्वानां प्रायशश्च यत् । आदौ सर्वत्र तद्युक्तमभिधातुमिदं पुनः ॥ ३८ ॥

'प्रवृत्त्यङ्गं' प्रवृत्तिकारणं 'अदः' फलं 'श्रेष्ठं' ज्यायः 'सत्त्वानां' फलार्थिनां प्राणिविशेषाणां 'प्रायशः' प्रायेण, चकारो वक्तव्यान्तरसमुच्चये, 'यद्' यस्माद् 'आदौ' प्रथमं 'सर्वत्र' सर्वकार्येषु 'तत्' तस्माद् 'युक्तम्' उचितम् 'अभिधातुं' भणितुं संक्षेपादादाविति–आदावेव, विस्तरेण फलभणने शास्त्रार्थस्य अतिव्यवधानेन श्रोतुस्तत्र नीरसभावप्रसङ्गेनानादर एव स्यादिति, 'इदं पुन' रिति यत्पुनर्व्यासतः फलं तदिदं–वक्ष्यमाणम् ॥ २ ॥

यथा–विशिष्टं देवसौख्यं यच्छिवसौख्यं च यत्परम् । धर्मकल्पद्रुमस्येदं, फलमाहुर्मनीषिणः ॥ ३९ ॥

'विशिष्टं' सौधर्मादिदेवलोकसंबन्धितया शेषदेवसौख्यातिशायि 'देवसौख्यं' सुरशर्म यदिहैव वक्ष्यमाणं, 'शिवसौख्यं' मुक्तिशर्म, चः समुच्चये, यदिति प्राग्वत्, 'परं' प्रकृष्टं, तत्किमित्याह–'धर्मकल्पद्रुमस्य' भावधर्मकल्पपादपस्य 'इदं' प्रतीतरूपतया प्रथमानं 'फलं' साध्यमाहुः–उक्तवन्तः 'मनीषिणः' सुधर्मस्वामिप्रभृतयो महामुनय इति ॥ ३ ॥

इत्युक्तो धर्मः, साम्प्रतमस्य फलमनुवर्णयिष्यामः ॥ १ ॥ (४४४)

रियाए समणे निग्गंथे वाणमंतराणं देवाणं तेउल्लेसं वीइवयइ, एवं दुमासपरियाए समणे निग्गंथे असुरिंदवज्जिआणं भवणवासीणं देवाणं तेउलेसं वीइवयइ, तिमासपरियाए समणे निग्गंथे असुरिंदाणं देवाणं तेउलेसं वीतीवयइ, चउमासपरियाए समणे निग्गंथे चंदिमसूरियवज्जियाणं गहगणनक्खत्ततारारूवाणं जोतिसियाण तेउलेसं वीईवयइ, पंचमासपरियाए समणे निग्गंथे चंदिमसूरियाणं जोइसियाणं तेउलेसं वीइवयइ, छम्मासपरियाए समणे निग्गंथे सोहम्मीसाणाणं तेउलेसं वीतीवयइ, सत्तमासपरियाए समणे निग्गंथे सणंकुमारमाहिंदाणं तेउलेसं वीइवयइ, अट्ठमासपरियाए समणे निग्गंथे बंभलोगलंतगदेवाणं तेउलेसं वीइवयइ, नवमासपरियाए समणे निग्गंथे महासुक्कसहस्साराणं देवाणं तेउलेसं वीईवयइ, दसमासपरियाए समणे निग्गंथे आणयपाणयआरणअच्चुआणं देवाणं तेउलेसं वीइवयइ, एक्कारसमासपरियाए समणे निग्गंथे गेवेज्जाणं देवाणं तेउलेसं वीइवयइ, वारमासपरियाए समणे निग्गंथे अणुत्तरोववाइयाणं देवाणं तेउलेसं वीइवयइ, तेण परं सुक्के सुक्काभिजाती भवित्ता सिज्झइ बुज्झइ मुच्चइ परिनिव्वाइ सव्वदुक्खाणमंतं करेइ ”त्ति (१२-५३७) ॥ ३ ॥

इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ यतिधर्मविषयविधिः षष्ठोऽध्यायः समाप्तः ।

## अथ सप्तमः अध्यायः

अथ सप्तमोऽध्याय आरभ्यते, तस्य चेदमादिसूत्रम्—

फलप्रधान आरम्भः, इति सल्लोकनीतितः । संक्षेपादुक्तमस्येदं, व्यासतः पुनरुच्यते ॥ ३७॥

एवंविधस्य—स्वावस्थोचितानुष्ठानारम्भिणो यतेः—साधोः 'प्रायो' बाहुल्येन भावशुद्धेः सकाशात् महात्मनः उत्त-रूपस्य 'विनिवृत्ताग्रहस्य' उपरतशरीरादिगोचरमूर्छादोषस्य 'उच्चैः' अत्यर्थं 'मोक्षतुल्यो' निर्वाणकल्पो भवोऽपि, मोक्ष-रतावन्मोक्ष एवेत्यपिशब्दार्थः, 'हिः' स्फुटम्, यदवाचि—" निर्जितमदमदनानां वाक्कायमनोविकाररहितानाम् । विनिवृत्तप-राशानामिहैव मोक्षः सुविहितानाम् ॥ २११ ॥ " (प्रशम०) ॥१॥ अत्रोपपत्तिमाह—

सद्दर्शनादिसंप्राप्तेः, संतोषामृतयोगतः । भावैश्वर्यप्रधानत्वात्तदासन्नत्वतस्तथा ॥ ३५ ॥ इति ।

सद्दर्शनादीनाम्—अधःकृतचिन्तामणिकल्पद्रुमकामधेनूपमानानां सम्यग्दर्शनज्ञानचारित्राणां संप्राप्तेः—लाभात् यः संतोषामृतयोगस्तस्मात्, मोक्षतुल्यो भवोऽपि हीति संबन्धः, उपपत्त्यन्तरमाह—'भावैश्वर्यप्रधानत्वात्' भावैश्वर्येण—क्षमा-मार्दवादिना प्रधानः—उत्तमस्तद्भावस्तत्त्वं तस्मात् सकाशात् 'तदासन्नत्वतो' मोक्षासन्नभावात्, तथेति हेत्वन्तरसूचक इति॥

२ ॥ एतदेव समर्थयन्नाह—

उक्तं मासादिपर्यायवृद्ध्या द्वादशभिः परम् । तेजः प्राप्नोति चारित्री, सर्वदेवेभ्य उत्तमम् ॥ ३६ ॥ इति ।

'उक्तं' निरूपितं भगवत्यां, किमित्याह—'मासादिपर्यायवृद्ध्या' मासेन द्वाभ्यां त्रिभिरित्यादिक्रमेण पर्यायस्य वृद्धौ सत्यां यावद् द्वादशभिर्मासैः 'परं' प्रकृष्टं 'तेजः' चित्तसुखलाभलक्षणं 'प्राप्नोति' अधिगच्छति 'चारित्री' वि-शिष्टचारित्रपात्रं पुमान्, परतस्तेन व्यनक्ति—'सर्वदेवेभ्यो' भवनवासिप्रभृतिभ्योऽनुत्तरसुरावसानेभ्यः सकाशादुत्तमं सर्वसु-रसुखातिशायीति भावः, भगवतीसूत्रं चेदं—"जे इमे अज्जत्ताए समणा निग्गंथा एए णं कस्स तेउल्लेसं वीतीवयंति ?, मासप-

'न' नैव 'सर्वसाधर्म्ययोगेन' सर्वैः धर्मैः साधर्म्य—सादृश्यं तद्योगेन ॥७२॥ एतत्कुत इत्याह—

यतेस्तदप्रवृत्तिनिमित्तस्य गरीयस्त्वादिति ॥ ७३ ॥ ( ४४० )

'यतेः' साधोः तत्र—असमञ्जसे अप्रवृत्तौ निमित्तस्य सम्यग्दर्शनादिपरिणामस्य 'गरीयस्त्वात्' असमञ्जसप्रवृत्तिनिमित्तान्मिथ्यात्वादेस्तथाविधकर्मोदयजन्यात् अत एव जीवास्वभावभूतात्सकाशादतिगुरुत्वात्॥७३॥ एतदेव भावयति—

वस्तुतः स्वाभाविकत्वादिति ॥ ७४ ( ४४१ )

'वस्तुतः' परमार्थवृत्त्या 'स्वाभाविकत्वात्' जीवस्वभावमयत्वात् सम्यग्दर्शनादेः समञ्जसप्रवृत्तिनिमित्तस्य ॥

तथा सद्भाववृद्धेः फलोत्कर्षसाधनादिति ॥ ७५ ॥ ( ४४२ )

सद्भावस्य—शुभपरिणामरूपस्य या वृद्धिः—उत्कर्षस्तस्याः 'फलोत्कर्षसाधनात्' उत्कृष्टफलरूपमोक्षनिष्पादनात् । वृद्धिं प्राप्तो हि शुद्धो भावः सम्यग्दर्शनादिर्मोक्षं साधयति, नतु मिथ्यात्वादिः कदाचनापि, अतः परमफलसाधकत्वेन मिथ्यात्वादिभ्योऽसौ गरीयानिति ॥ ७५ ॥एतदपि कुत इत्याह—

उपप्लवविगमेन तथावभासनादितीति ॥ ७६ ॥ ( ४४३ )

'उपप्लवविगमेन' रागद्वेषाद्यान्तरोपद्रवापगमेन 'तथावभासनात्' तथा—असमञ्जसस्याप्रवृत्तियोग्यतयाऽवभासनात्—प्रतीतेः, भावयतेः कर्तुः, इतीतरस्यामिवेतर इति निदर्शनमात्रमिति स्थितं, इतिः वाक्यपरिसमाप्तौ ॥ ७६ ॥ अथोपसंहरन्नाह—

एवंविधयतेः प्रायो, भावशुद्धेर्महात्मनः । विनिवृत्ताग्रहस्योच्चैर्मोक्षतुल्यो भवोऽपि हि ॥ ३४ ॥ इति ।

सुन्दरं रूपं आलयो लक्षणानां रहितमामयेन युक्तं प्रज्ञया संगतं कलाकलापेन ॥१०॥ (४८३)

सुन्दरं शुभसंस्थानवत्तया रूपम्–आकारः१, आलयो–लक्षणानां–चक्रवज्रस्वस्तिकमीनकलशकमलादीनां २, 'रहितं' परित्यक्तं 'आमयेन' ज्वरातिसारभगन्दरादिना रोगेण ३, 'युक्तं' संगतं 'प्रज्ञया' बहुबहुविधादिविशेषणग्राहिकया वस्तुबोधशक्त्या४, 'संगतं'–संबद्धं कलानां–लिपिशिक्षादीनां शकुनिरुतपर्यवसानानां कलापेन–समुदायेन ॥१०॥

तथा–गुणपक्षपातः १, असदाचारभीरुता २, कल्याणमित्रयोगः ३, सत्कथाश्रवणं ४, मार्गानुगो बोधः ५, सर्वोचितप्राप्तिः हिताय सत्त्वसंघातस्य, परितोषकरी गुरूणां, संवर्द्धनी गुणान्तरस्य, निदर्शनं जनानां ६ अत्युदार आशयः७ असाधारणा विषयाः रहिताः संक्लेशेन, अपरोपतापिन, अमङ्गुलावसाना इति८॥११॥(४८४)

गुणाः–शिष्टाचरितविशेषा असज्जनानभ्यर्थनादयः, तथा च पठन्ति–"असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः, प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम्। विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां, सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्? ॥ २१२ ॥" तेषां पक्षः–अभ्युपगमः तत्र पातः–अवतार इति, अत एव 'असदाचारभीरुता' चौर्यपारदार्यधनाचाराद् व्याधिविषप्रदीपनकादिभ्य इव दूरं भीरुभावः, 'कल्याणमित्रैः'–सुकृतबुद्धिनिबन्धनजनैर्योगः–संबन्धः, सतां–सदाचाराणां गृहिणां यतीनां च कथाश्रवणं–चरिताकर्णनं, 'मार्गानुगो'–मुक्तिपथानुवर्त्ती, 'बोधो' वस्तुपरिच्छेदः, सर्वेषां धर्मार्थकामानामाराधनं प्रत्युचितानां वस्तूनां प्राप्तिः–लाभः सर्वोचितप्राप्तिः, कीदृश्यसाविति विशेषणचतुष्टयेनाह–'हिताय' कल्याणाय 'सत्त्वसंघातस्य' जन्तुजातस्य, 'परितोषकरी' प्रमोददायिनी 'गुरूणां' मातापित्रादिलोकस्य,

समाचरणचातुर्यगुणेन सुखहेतुत्वं—संतोषनिमित्तभावः १३, कुशलः—परिणामसुन्दरोऽनुबन्धः सर्वकार्याणां १४, महाकल्याणकेषु—जिनजन्ममहाव्रतप्रतिपत्त्यादिषु पूजायाः—स्नात्रपुष्पारोपणधूपवासप्रदानादिना प्रकारेण करणं—निर्मापणं १५, तीर्थकराणां—निजप्रभावावर्जितजगत्त्रयजन्तुमानसानां अमृतमेघासाराकारसरसदेशनाविधिनिहतभव्यभविकजनमनःसंतापानां पुरुषरत्नविशेषाणां सेवा—वन्दननमनपर्युपासनपूजनादिनाऽऽराधना १६, सतः—पारमार्थिकस्य धर्मस्य—श्रुतचारित्रलक्षणस्य श्रुतौ—आकर्णने रतिः—स्वर्गप्रभवतुम्बुरुप्रभृतिगान्धर्विकारब्धपञ्चमस्वरगीतश्रवणरतेरपि सकाशादधिकसंतोषलक्षणा १७, सदा—सर्वकालं सुखित्वं—बाधशयनासनवस्त्रालङ्कारादिजनितशरीरसुखयुक्तत्वम् १८ ॥ ८ ॥

तथा—तच्च्युतावपि विशिष्टे देशे विशिष्ट एव काले स्फीते महाकुले निष्कलङ्केऽन्वयेन उदग्रे सदाचारेण आख्यायिकापुरुषयुक्ते अनेकमनोरथापूरकमत्यन्तनिरवद्यं जन्मेति ॥ ९ ॥ (४५२)

'तच्च्युतावपि' देवलोकादवतारे, किं पुनस्तत्र सुखमेवेत्यपिशब्दार्थः, विशिष्टे देशे—मगधादौ विशिष्ट एव काले—सुषमदुष्षमादौ 'स्फीते' परिवारादिस्फीतिमति 'महाकुले' इक्ष्वाक्वादौ 'निकलङ्के' असदाचारकलङ्कपङ्कविकले 'अन्वयेन' पितृपितामहादिपुरुषपरम्परया, अत एव 'उदग्रे' उद्धटे, केनेत्याह—'सदाचारेण' देवगुरुस्वजनादिसमुचितप्रतिपत्तिलक्षणेन, आख्यायिका—कथा तत्प्रतिबद्धा ये पुरुषास्तथाविधान्यासाधारणाचरणगुणेन तैर्युक्ते—संबद्धे, किमित्याह—'अनेकमनोरथापूरकं' स्वजनपरजनपरिवारादिमनोऽभिलषितपूरणकारि, अत्यन्तनिरवद्यं—शुभलग्नशुभग्रहावलोकनादिविशिष्टगुणसमन्वितेन एकान्ततो निखिलदोषविकलं 'जन्म' प्रादुर्भाव इति ॥ ९ ॥ तत्र च यद्भवति तदाह—

तत्रोत्तमा रूपसंपत्, सत्स्थितिप्रभावसुखद्युतिलेश्यायोगः, विशुद्धेन्द्रियावधित्वं, प्रकृष्टानि भोगसाधनानि, दिव्यो विमाननिवहः, मनोहराण्युद्यानानि, रम्या जलाशयाः, कान्ता अप्सरसः, अतिनिपुणाः किङ्कराः, प्रगल्भो नाट्यविधिः, चतुरोदारा भोगाः, सदा चित्ताह्लादः, अनेकसुखहेतुत्वं, कुशलानुबन्धः, महाकल्याणपूजाकरणं, तीर्थङ्करसेवा, सद्धर्मश्रुतौ रतिः, सदा सुखित्वमिति ॥ ८ ॥ (४५१)

'तत्र' देवस्थाने 'उत्तमा' प्रकृष्टा 'रूपसंपत्' शरीरसंस्थानलक्षणा १, सत्यः-सुन्दरा याः स्थितिप्रभावसुखद्युतिलेश्यास्ताभिर्योगः-समागमः, तत्र स्थितिः-पल्योपमसागरोपमप्रमाणायुष्कलक्षणा, प्रभावो-निग्रहानुग्रहसामर्थ्यं, सुखं-चित्तसमाधिलक्षणं, द्युतिः-शरीराभरणादिप्रभा, लेश्या-तेजोलेश्यादिका इति २ विशुद्धानि-स्वविषयाविपर्यस्तज्ञानजननेन निर्मलानीन्द्रियाणि अवधिश्च यस्य स तथा तद्भावस्तत्त्वं ३, 'प्रकृष्टानि' प्रकर्षवन्ति 'भोगसाधनानि' भोगोपकरणानि ४, तान्येव दर्शयति-'दिव्यो' निजप्रभामण्डलविडम्बिताशेषतेजस्विचक्रो 'विमाननिवहः' विमानसंघातः ५, 'मनोहराणि' मनःप्रमोदप्रदानि अशोकचम्पकपुन्नागनागप्रभृतिवनस्पतिसमाकुलानि 'उद्यानानि' वनानि ६, 'रम्या' रन्तुं योग्याः 'जलाशयाः' वापीह्रदसरोवरलक्षणाः ७, 'कान्ताः' कान्तिभाजः 'अप्सरसो' देव्यः ८, 'अतिनिपुणाः' परिशुद्धविनयविधिविधायिनः 'किङ्कराः' प्रतीतरूपा एव ९, 'प्रगल्भः' प्रौढो 'नाट्यविधिः' तीर्थंकरादिचरितप्रतिबद्धाभिनयलक्षणः १०, 'चतुरोदाराः' चतुराः-झटित्येवेन्द्रियचित्ताक्षेपदक्षा उदाराश्च-उत्तमाः भोगाः-शब्दादयः श्रोत्रादीन्द्रियविषयाः ११, 'सदा' सततं 'चित्ताह्लादो' मनःप्रसादरूपः १२, अनेकेषां-स्वव्यतिरिक्तानां देवादीनां तत्तज्ज्ञानाविधसमुचिताचार-

सुगममेव ।

द्विविधं फलम्—अनन्तरपरम्परभेदादिति ॥ २ ॥ ( ४४५ )

'द्विविधं' द्विरूपं फलं धर्मस्य, कथमित्याह—अनन्तरपरम्परभेदात्, आनन्तर्येण परम्परया च ॥२ ॥

तत्रानन्तरफलमुपप्लवह्रास इति ॥ ३ ॥ ( ४४६ )

'तत्र' तयोर्मध्येऽनन्तरफलं दर्श्यते, तद्यथा—'उपप्लवह्रासः' उपप्लवस्य—रागद्वेषादिदोषोद्रेकलक्षणस्य ह्रासः—परिहाणिः॥

तथा—भावैश्वर्यवृद्धिरिति ॥ ४ ॥ ( ४४७ )

भावैश्वर्यस्य—औदार्यदाक्षिण्यपापजुगुप्सादिगुणलाभलक्षणस्य वृद्धिः—उत्कर्षः ॥४॥

तथा—जनप्रियत्वमिति ॥ ५ ॥ ( ४४८ )

सर्वलोकचित्ताह्लादकत्वम् ॥५॥

परम्परफलं तु सुगतिजन्मोत्तमस्थानपरम्परानिर्वाणावाप्तिरिति ॥ ६ ॥ ( ४४९ )

यत्र सुगतिजन्म यच्चोत्तमस्थानपरम्परया करणभूतया निर्वाणं तयोरवाप्तिः पुनः परम्पराफलमिति ॥६॥ अथ स्वयमेवैतत्सूत्रं भावयति—

सुगतिर्विशिष्टदेवस्थानमिति ॥ ७ ॥ ( ४५० )

सुगतिः किमुच्यते इत्याह—'विशिष्टदेवस्थानं' सौधर्मादिकल्पलक्षणम् ॥ ७ ॥

ताप्रवृत्तेः शुभानुबन्धित्वादुदारसुखसाधनान्येव बन्धहेतुत्वाभावेनेति ॥ २९ ॥ (४७२)

प्रभूतानि-प्रचुराणि उदाराणि-उदग्राणि, किं पुनरन्यथारूपाणीत्यपिशब्दार्थः, 'तस्य' पूर्वोक्तजीवस्य 'भोगसाधनानि' पुरपरिवारान्तःपुरादीनि, उदारसुखसाधनान्येवेत्युत्तरेण योगः, कुत इत्याह-'अयत्नोपनतत्वात्' अयत्नेन-अत्युत्कटपुण्यप्रकर्षोदयपरिपाकाक्षिप्तत्वात् तथाविधपुरुषकाराभावेनोपनतत्वाद्-ढौकितत्वात्, तदपि कुत इत्याह-'प्रासङ्गिकत्वात्' कृषिकरणे पलालस्येव प्रसक्तोत्पन्नत्वात्, एतदपि अभिष्वङ्गाभावात्, भरतादीनामिव निबिडगृद्ध्यभावात्, अयमपि 'कुत्सिताप्रवृत्तेः' कुत्सितेषु-नीतिमार्गोत्तीर्णेषु भोगसाधनेष्वप्रवृत्तेः, इयमपि 'शुभानुबन्धित्वात्' मोक्षप्राप्तिनिमित्तार्यदेशदृढसंहननादिकुशलकार्यानुबन्धविधायित्वात्, किमित्याह- 'उदारसुखसाधनान्येव' उदारस्य-अन्यातिशायिनः सुखस्यैव-शरीरचित्ताह्लादरूपस्य साधनानि-जनकानि, न त्विहलोकपरलोकयोरपि दुःखस्येति, अत्रैव वाच्विकं हेतुमाह-'बन्धहेतुत्वाभावेन' बन्धस्य-कुगतिपातहेतोरशुभकर्मप्रकृतिलक्षणस्य हेतुत्वं-हेतुभावः प्रक्रान्तभोगसाधनानामेव तस्याभावेन, इदमुक्तं भवति-प्रभूतोदाराण्यपि भोगसाधनानि बन्धहेतुत्वाभावादुदारसुखसाधनान्येव तस्य भवन्ति, बन्धहेतुत्वाभावश्चायत्नोपनतत्वादिकादुत्तरोत्तरहेतुबीजभूताद्धेतुपञ्चकादिति ॥२९॥ बन्धहेतुत्वाभावमेव विशेषतो भावयन्नाह-

अशुभपरिणाम एव हि प्रधानं बन्धकारणं, तदङ्गतया तु बाह्यमिति ॥ ३० ॥ (४७३)

अशुभपरिणाम एव 'हिः' यस्मात् 'प्रधानं' मुख्यं 'बन्धकारणं' नरकादिफलपापकर्मबन्धननिमित्तं न त्वन्यत्किंचित्, 'तदङ्गतया तु' अशुभपरिणामकारणतया पुनर्बाह्यम्-अन्तःपुरपुरादिबन्धकारणमिति ॥३०॥ कुत इत्याह-

विशिष्टतरं तु सर्वमिति ॥ २३ ॥ ( ४६६ )

प्रागुक्तादतिविशिष्टं पुनः सर्वं अत्यन्तनिरवद्यं जन्म ( ४५२ ) सुन्दररूपादि ( ४५३ ) ॥२३॥ कुत एतदित्याह–

क्लिष्टकर्मविगमादिति ॥ २४ ॥ ( ४६७ )

दौर्गत्यदौर्भाग्यदुष्कुलत्वादिपर्यायवेद्यकर्मविरहात् ॥२४॥ अयमपि–

शुभतरोदयादिति ॥ २५ ॥ ( ४६८ )

शुभतराणाम्–अतिप्रशस्तानां कर्मणां परिपाकात् ॥ २६ ॥ असावपि–

जीववीर्योल्लासादिति ॥ २६ ॥ ( ४६९ )

जीववीर्यस्य–परिशुद्धसामर्थ्यलक्षणस्य उल्लासाद्–उद्रेकात् ॥ २६ ॥ एषोऽपि–

परिणतिवृद्धेरिति ॥ २७ ॥ ( ४७० )

परिणतेः-तस्य तस्य शुभाध्यवसायस्य वृद्धेः-उत्कर्षात् ॥ २७ ॥ इयमपि–

तत्तथास्वभावत्वादिति ॥ २८ ॥ ( ४७१ )

तस्य-जीवस्य तथास्वभावत्वात्-परिणतिवृद्धिस्वरूपत्वात्, परिपक्वे हि भव्यत्वे प्रतिक्षणं वर्द्धन्त एव जीवानां शुभतराः परिणतय इति ॥ २८ ॥

किंच-प्रभूतोदाराण्यपि तस्य भोगसाधनानि, अयत्नोपनतत्वात् प्रासङ्गिकत्वादभिष्वङ्गाभावात् कुत्सि-

ततो–विशिष्टनरं देवस्थानमिति ॥ १७ ॥ ( ४६० )

विशिष्टतरं–प्राग्लब्धदेवस्थानापेक्षया सुन्दरतरं स्थानं–विमानावासलक्षणमस्य स्यात् ॥१७॥

ततः–सर्वमेव शुभतरं तत्रेति ॥ १८ ॥ ( ४६१ )

' सर्वमेव ' रूपसंपदादि ' शुभतरं ' प्राच्यापेक्षयाऽतीव शुभं तत्र स्थाने ॥ १८ ॥

परं–गतिशरीरादिहीनमिति ॥ १९ ॥ ( ४६२ )

गतिः–देशान्तरसंचाररूपा शरीरं–देहः आदिशब्दात् परिवारप्रवीचारादिपरिग्रहस्तैर्हीनं–तुच्छं स्यात्, उत्तरोत्तरदेवस्थानेषु पूर्वपूर्वदेवस्थानेभ्यो गत्यादीनां हीनतया शास्त्रेषु प्रतिपादनात् ॥ १९ ॥

तथा–रहितमौत्सुक्यदुःखेनेति ॥ २० ॥ ( ४६३ )

रहितं–त्यक्तं चित्तवाक्कायत्वराख्यव्याबाधया ॥ २० ॥ पुनरपि कीदृगित्याह–

अतिविशिष्टाल्हादादिमदिति ॥ २१ ॥ ( ४६४ )

अतिविशिष्टा-अत्युत्कर्षभाजो ये आह्लादादय-आह्लादकुशलानुबन्धमहाकल्याणपूजाकरणादयः सुकृतविशेषाः तद्युक्तम् ॥

ततः–तच्च्युतावपि विशिष्टदेश इत्यादि समानं पूर्वेणेति ॥ २२ ॥ ( ४६५ )

सुगममेव। नवरं ' पूर्वेणे 'ति पूर्वग्रन्थेन, स च ' विशिष्टे देशे विशिष्ट एव काले स्फीते महाकुले ' ( ४५२ ) इत्यादिरूप इति ॥ २२ ॥ विशेषमाह–

'संवर्द्धिनी' वृद्धिकारिणी 'गुणान्तरस्य' स्वपरेषां गुणविशेषस्य, 'निदर्शनं' दृष्टान्तभूमिस्तेषु तेष्वाचरणविशेषेषु 'जनानां' विशिष्टलोकानां, तथाऽत्युदारः—अतितीव्रौदार्यवान् आशयो—मनःपरिणामः, 'असाधारणाः' अन्यैरसामान्याः शालिभद्रादीनामिव 'विषयाः' शब्दादयः, 'रहिताः' परिहीणाः 'संक्लेशेन' अत्यन्ताभिष्वङ्गेन, 'अपरोपतापिनः' परोपरोधविकलाः 'अमङ्गुलावसानाः' पथ्यान्नभोगा इव सुन्दरपरिणामाः ॥ ११ ॥

तथा—काले धर्मप्रतिपत्तिरिति ॥ १२ ॥ ( ४५५ )

'काले' विषयवैमुख्यलाभावसरलक्षणे 'धर्मप्रतिपत्तिः' सर्वसावद्यव्यापारपरिहाररूपा ॥१२॥

तत्र च—गुरुसहायसंपदिति ॥ १३ ॥ ( ४५६ )

गुर्वी—सर्वदोषविकलत्वेन महती सहायानां—गुरुगच्छादीनां संपत्-संपत्तिः ॥ १३ ॥

ततश्च—साधु संयमानुष्ठानमिति ॥ १४ ॥ ( ४५७ )

'साधु' सर्वातिचारपरिहारतः शुद्धं संयमस्य—प्राणातिपातादिपापस्थानविरमणरूपस्य अनुष्ठानं-करणम् ॥१४॥

ततोऽपि—परिशुद्धाराधनेति ॥ १५ ॥ ( ४५८ )

परिशुद्धा—निर्मलीमसा आराधना—जीवितान्तसंलेखनालक्षणा ॥१५॥

तत्र— विधिवच्छरीरत्याग इति ॥ १६ ॥ ( ४५९ )

शास्त्रीयविधिप्रधानं यथा भवति एवं कलेवरपरिमोक्षः ॥१६॥

# अथ अष्टमः अध्यायः ।

---

अधुनाऽष्टम आरभ्यते, तस्य चेदमादिसूत्रम्–

किं चेह बहुनोक्तेन, तीर्थकृत्त्वं जगद्धितम् । परिशुद्धादवाप्नोति, धर्माभ्यासान्नरोत्तमः ॥ ४३ ॥ इति ।

'किंचे'त्यभ्युच्चये, 'इह' धर्मफलचिन्तायां 'बहुना' प्रचुरेणोक्तेन धर्मफलेन?, यतः-'तीर्थकृत्त्वं' तीर्थकरपद-लक्षणं 'जगद्धितं' जगज्जन्तुजातहिताधानकरं 'परिशुद्धाद्' अमलीमसाद् 'अवाप्नोति' लभते धर्माभ्यासात् प्रतीत-रूपात् 'नरोत्तमः' स्वभावत एव सामान्यापरपुरुषप्रधानः, तथाहि–तीर्थङ्करपदयोग्यजन्तूनां सामान्यतोऽपि लक्षणमिदं शा-स्त्रेषूद्घुष्यते–यथा 'एते आकालं परार्थव्यसनिनः, उपसर्जनीकृतस्वार्थाः, उचितक्रियावन्तः, अदीनभावाः, सफलारम्भिणः, अदृढानुशयाः, कृतज्ञतापतयः, अनुपहतचित्ताः, देवगुरुबहुमानिनः, तथा गम्भीराशया' इति (ललित०) ॥१॥ ननु यदि तीर्थकृत्त्वं धर्मादवाप्नोति तथापि कथं तदेव प्रकृष्टं धर्मफलमिति ज्ञातुं शक्यमित्याह–

नातः परं जगत्यस्मिन्, विद्यते स्थानमुत्तमम् । तीर्थकृत्त्वं यथा सम्यक्, स्वपरार्थप्रसाधकम् ॥ ४४ ॥ इति ॥

'न' नैव 'अतः' तीर्थकृत्त्वात् 'परम्' अन्यत् 'जगत्यस्मिन्' उपलभ्यमाने चराचरस्वभावे 'विद्यते' सम-स्ति 'स्थानं' पदम् 'उत्तमं' प्रकृष्टं 'तीर्थकृत्त्वम्' उक्तरूपं 'यथा' येन प्रकारेण 'सम्यग्' यथावत् 'स्वपरार्थप्रसा-धकं' स्वपरप्रयोजननिष्पादकम् ॥ २ ॥ एतदेव भावयति–

प्रकर्षनिष्पत्तौ शैलेश्यवस्थालक्षणायां निर्वाणस्य—सकलक्लेशलेशविनिर्मुक्तेर्जीवस्वरूपलाभलक्षणस्यावाप्तिः—लाभ 'इति' परिसमाप्ताविति ॥ ४१ ॥

यत्किंचन शुभं लोके, स्थानं तत्सर्वमेव हि । अनुबन्धगुणोपेतं, धर्मादाप्नोति मानवः ॥ ४० ॥ इति ।

'यत्किञ्चन' सर्वमेवेत्यर्थः 'शुभं' सुन्दरं 'लोके' त्रिजगल्लक्षणे 'स्थानं' शक्राद्यवस्थास्वभावं तत्सर्वमेव 'हिः' स्फुटं, कीदृशमित्याह-'अनुबन्धगुणोपेतं' जात्यस्वर्णघटितघटादिवत् उत्तरोत्तरानुबन्धसमन्वितं 'धर्माद्' उक्तनिरुक्ताद् 'आप्नोति' लभते 'मानवः' पुमान्, मानवग्रहणं च तस्यैव परिपूर्णधर्मसाधनसहत्वादिति ॥ १ ॥

तथा—धर्मश्चिन्तामणिः श्रेष्ठो, धर्मः कल्याणमुत्तमम् । हित एकान्ततो धर्मो, धर्म एवामृतं परम् ॥४१॥ इति

एतन्निगदसिद्धमेव, परं यत्पुनः पुनर्धर्मशब्दोपादानं तद्धर्मस्यात्यन्तादरणीयताख्यापनार्थमिति ॥ २ ॥

तथा—चतुर्दशमहारत्नसद्भोगान्नृष्वनुत्तमम् । चक्रवर्त्तिपदं प्रोक्तं, धर्महेलाविजृम्भितम् ॥ ४२ ॥

चतुर्दशानां महारत्नानां—सेनापति—गृहपति—पुरोहित—गज—तुरग—वर्द्धकि—स्त्री—चक्र—च्छत्र—चर्म—मणि—काकिणी—खड्ग—दण्ड—लक्षणानां 'सद्भोगात्' परानपेक्षितया सुन्दरभोगात् 'नृषु' नरेषु मध्ये 'अनुत्तमं' सर्वप्रधानं, किं तदित्याह—'चक्रवर्त्तिपदं' चक्रधरपदवी 'प्रोक्तं' प्रतिपादितं सिद्धान्ते 'धर्महेलाविजृम्भितं' धर्मलीलाविलसितमिति ॥ ३ ॥ इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मबिन्दुवृत्तौ धर्मफलविधिः सप्तमोऽध्यायः व्याख्यातः॥

परिणामस्य शुभत्वम्

परिणाम एव 'शुभः' सम्यग्दर्शनादिः 'मोक्षकारणमपि' मुक्तिहेतुरपि, किं

'एवं' यथा अशुभबन्धने तथा परिणाम एव 'शुभः' सम्यग्दर्शनादिः 'मोक्षकारणमपि' मुक्तिहेतुरपि, किं पुनर्बन्धस्येत्यपिशब्दार्थः ॥ ३३ ॥ कुत इत्याह–

तदभावे समग्रक्रियायोगेऽपि मोक्षासिद्धेरिति ॥ ३५ ॥ ( ४७८ )

तस्य–शुभपरिणामस्याभावे 'समग्रक्रियायोगेऽपि' परिपूर्णश्रामण्योचितबाह्यानुष्ठानकलापसंभवेऽपि, किं पुनस्तदभावे इत्यपिशब्दार्थः, 'मोक्षासिद्धेः' निर्वाणानिष्पत्तेरिति ॥३५॥ एतदपि कुत इत्याह–

सर्वजीवानामेवानन्तशो ग्रैवेयकोपपातश्रवणादिति ॥ ३६ ॥ ( ४७९ )

'सर्वजीवानामेव' सर्वेषामपि व्यवहारार्हाणां प्राणिनाम् 'अनन्तशः' अनन्तान् वारान् ग्रैवेयकेषु–विमानविशेषेषूपपातस्य–उत्पत्तेः श्रवणात्–शास्त्रे समाकर्णनात् ॥ ३६ ॥ यदि नामैवं ततः किं सिद्धमित्याह–

समग्रक्रियाऽभावे तदनवाप्तेरिति ॥ ३७ ॥ ( ४८० )

'समग्रक्रियाऽभावे' परिपूर्णश्रामण्यानुष्ठानाभावे 'तदनवाप्तेः' नवमग्रैवेयकोपपाताप्राप्तेः, तथा चावाचि–"आणोहेणाणंता मुक्का गेवेज्जगेसु य सरीरा। न य तत्थाऽसंपुण्णाए साहुकिरियाइ उववाओत्ति ॥ २१३ ॥" ( पञ्चा-६९२ ) [ओघेन ग्रैवेयकेषु च शरीराण्यनन्तानि मुक्तानीत्याज्ञा। नच तत्रासंपूर्णायां साधुक्रियायामुपपातः ॥१॥] ॥३७॥ उपसंहरन्नाह–

इत्यप्रमादसुखवृद्ध्या तत्काष्ठासिद्धौ निर्वाणावाप्तिरितीति ॥ ३८ ॥ ( ४८१ )

'इति' एवमुक्तनीत्याऽप्रमादसुखस्य–अप्रमत्ततालक्षणस्य वृद्ध्या–उत्कर्षेण तस्य–चारित्रधर्मस्य काष्ठासिद्धौ–

तदभावे बाह्यादल्पबन्धभावादिति ॥ ३१ ( ४७४ )

'तदभावे' अशुभपरिणामाभावे बाह्यात्--जीवहिंसादेः 'अल्पबन्धभावात्' तुच्छबन्धोत्पत्तेः॥ ३१ ॥ एतदपि कथमित्याह--

वचनप्रामाण्यादिति ॥ ३२ ॥ ( ४७५ )

वचनस्य-आगमस्य 'प्रामाण्यात्' प्रमाणभावात् ॥ ३२ ॥ एतदेव भावयन्नाह--

बाह्योपमर्देऽप्यसंज्ञिषु तथाश्रुतेरिति ॥ ३३ ॥ ( ४७६ )

बाह्यः--शरीरमात्रजन्यः स चासावुपमर्दश्च--बहुतमजीवोपघातरूपः तत्रापि, किं पुनस्तदभावे इत्यपिशब्दार्थः, 'असंज्ञिषु' संमूर्छजमहामत्स्यादिषु 'तथा' अल्पतया बन्धस्य 'श्रुतेः' 'अस्सन्नी खलु पढमं' इत्यादेर्वचनस्य सिद्धान्ते समाकर्णनात्, तथाहि-असंज्ञिनो महामत्स्यादयो योजनसहस्रादिप्रमाणशरीराः स्वयंभूरमणमहासमुद्रमनवरतमालोडयमानाः पूर्वकोट्यादिजीविनोऽनेकसत्त्वसंघातसंहारकारिणोऽपि रत्नप्रभापृथिव्यामेव उत्कर्षतः पल्योपमासंख्येयभागजीविषु चतुर्थप्रतरवर्तिनारकेषु जन्म लभन्ते न परतः, तन्दुलमत्स्यस्तु बाह्योपमर्दाभावेऽपि निर्निमित्तमेवापूरितातितीव्ररौद्रध्यानोऽन्तर्मुहूर्त्तमायुरनुपाल्य सप्तमनरकपृथिव्यां त्रयस्त्रिंशत्सागरोपमायुर्नारक उत्पद्यते इति परिणाम एव प्रधानं बन्धकारणमिति सिद्धं भवतीति ॥ ३३ ॥ एवं सति यदन्यदपि सिद्धिमास्कन्दति तद्दर्शयति--

एवं परिणाम एव शुभो मोक्षकारणमपीति ॥ ३४ ॥ ( ४७७ )

पक्षापेक्षया, यतो दर्शनमोहसप्तकस्यापूर्वकरणस्य एव क्षयं करोतीति तन्मतं, न तु यथा कार्मग्रन्थिकाभिप्रायेण अविरतसम्यग्दृष्ट्याद्यन्यतरगुणस्थानकचतुष्टयस्य इति १४। ततो 'मोहसागरोत्तारः' मोहो–मिथ्यात्वमोहादिः स एव सागरः–स्वयंभूरमणादिपारावारः मोहसागरः तस्मादुत्तारः–परपारप्राप्तिः १५, ततः 'केवलाभिव्यक्ति' केवलस्य–केवलज्ञानकेवलदर्शनलक्षणस्य जीवगुणस्य ज्ञानावरणादिघातिकर्मोपरतावभिव्यक्तिः–आविर्भावः १६, ततः 'परमसुखलाभः' परमस्य–प्रकृष्टस्य देवादिसुखातिशायिनः सुखस्य लाभः–प्राप्तिः, उक्तं च–"यच्च कामसुखं लोके, यच्च दिव्यं महासुखम्। वीतरागसुखस्येदमनंतांशे न वर्त्तते ॥ २१४ ॥" इति १७ ॥ ५ ॥ अत्रैव हेतुमाह—

**सदारोग्याप्तेरिति ॥ ६ ॥ ( ४८७ )**

सदारोग्यस्य–भावारोग्यरूपस्य आप्तेः–लाभात् ॥ ६ ॥ इयमपि कुत इत्याह–

**भावसंनिपातक्षयादिति ॥ ७ ॥ ( ४८८ )**

भावसंनिपातस्य–पारमार्थिकरोगविशेषस्य क्षयात्–उच्छेदात् ॥ ७ ॥ संनिपातमेव व्याचष्टे—

**रागद्वेषमोहा हि दोषाः, तथा तथाऽऽत्मदूषणादिति ॥ ८ ॥ ( ४८९ )**

'रागद्वेषमोहा' वक्ष्यमाणलक्षणाः 'हिः' स्फुटं 'दोषा' भावसंनिपातरूपाः, अत्र हेतुमाह–'तथा तथा' तेन तेन प्रकारेण–अभिष्वङ्गकरणादिना आत्मनो–जीवस्य दूषणात्–विकारप्रापणात् ॥ ८ ॥ 'तत्त्वभेदपर्यायैर्व्याख्ये'ति न्यायाद्रागादीनेव तत्त्वत आह–

तान्यतरगुणस्थानकस्थः प्रवृद्धतीव्रशुद्धध्यानाधीनमानसः क्षपकश्रेणिमारुरुक्षुरपूर्वगुणस्थानकमवाप्य प्रथमतः चतुरोऽनन्तानुबन्धिनः क्रोधादीन् युगपत् क्षपयितुमारभते, ततः सावशेषेष्वेतेषु मिथ्यात्वं क्षपयितुमुपक्रमते, ततस्तदवशेषे मिथ्यात्वे च क्षीणे सम्यग्मिथ्यात्वं सम्यक्त्वं च क्रमेणोच्छिनत्ति, तदनन्तरमेवाबद्धायुष्कोऽनिवृत्तिकरणं नाम सकलमोहापोहैकसहं नवमगुणस्थानकमध्यारोहति, तत्र च तथैव प्रतिक्षणं विशुद्ध्यमानः कियत्स्वपि संख्यातेषु भागेषु गतेष्वष्टौ कषायान्—अप्रत्याख्यानावरणप्रत्याख्यानावरणसंज्ञितान् क्रोधादीनेव क्षपयितुमारभते, क्षीयमाणेषु च तेष्वेताः षोडश प्रकृतीरध्यवसायविशेषात् निद्रानिद्रा१ प्रचलाप्रचला२ स्त्यानर्द्धि ३ नरकगति४ नरकानुपूर्वी५ तिर्यग्गति६ तिर्यगानुपूर्वी७ एकेन्द्रिय८ द्वीन्द्रिय९ त्रीन्द्रिय १० चतुरिन्द्रियजातिनाम ११ आतपनाम १२ उद्योतनाम १३ साधारणनाम १४ स्थावरनाम १५ सूक्ष्मनाम १६-लक्षणाः क्षपयति, ततोऽष्टकषायावशेषक्षये यदि पुरुषः प्रतिपत्ता ततो नपुंसकवेदं ततः स्त्रीवेदं ततो हास्यादिषट्कं ततः पुनः पुरुषवेदं क्षपयति, यदि पुनर्नपुंसकं स्त्री वा तदा पुरुषवेदस्थाने स्ववेदमितरवेदद्वयं च यथाजघन्यप्रथमतया क्षपयति, ततः क्रमेण क्रोधादीन् संज्वलनान् त्रीन्, अतः बादरलोभं चात्रैव क्षपयित्वा सूक्ष्मसंपरायगुणस्थाने च सूक्ष्मं सर्वथा विनिवृत्तसकलमोहविकारां क्षीणमोहगुणस्थानावस्थां संश्रयते, तत्र च समुद्रप्रतरणश्रान्तपुरुषवत् संग्रामाङ्गणविनिर्गतपुरुषवद्वा मोहनिग्रहनिश्चलनिबद्धाध्यवसायतया परिश्रान्तः सन्नन्तर्मुहूर्त्तं विश्रम्य तद्गुणस्थानकद्विचरमसमये निद्राप्रचले चरमसमये च ज्ञानावरणान्तरायप्रकृतिदशकं दर्शनावरणावशिष्टं प्रकृतिचतुष्कं च युगपदेव क्षपयति। बद्धायुः पुनः सप्तकक्षयानन्तरं विश्रम्य यथानिबद्धं चायुरनुभूय भवान्तरे क्षपकश्रेणिं समर्थयत इति। यश्चात्रापूर्वकरणोपन्यासानन्तरं क्षपकश्रेणेरुपन्यासः स सैद्धान्तिक-

वेभ्योऽत्यन्तोच्चा 'सम्पत्' द्विपदचतुष्पदादिसमृद्धिः ३ तस्यां च प्रभूतस्य–अनिभूयिष्ठस्योपकारस्य स्वपरगतस्य करणं–विधानं ४ अत एव आशयस्य–चित्तस्य विशुद्धिः–अमालिन्यरूपा ५ 'धर्मप्रधानता' धर्मैकसारत्वं ६ अतिनिपुणविवेकवशोपलब्धयथावस्थितसमस्तवस्तुतत्त्वतया अवन्ध्या–अनिष्फला क्रिया–धर्मार्थाद्याराधनरूपा यस्य तद्भावस्तत्त्वम् ७ ॥३॥

तथा–विशुद्ध्यमानाप्रतिपातिचरणावाप्तिः, तत्सात्म्यभावः, भव्यप्रमोदहेतुता, ध्यानसुखयोगः, अतिशयर्द्धिप्राप्तिरिति ॥ ४ ॥ (४८५)

विशुद्ध्यमानस्य संक्लिश्यमानविलक्षणतया अप्रतिपातिनः–कदाचिदप्यभ्रंशभाजः चरणस्य–चारित्रस्य अवाप्तिः–लाभः ८, ततश्च तेन–विशुद्ध्यमानाप्रतिपातिना चरणेन सात्म्यं–समानात्मता तत्सात्म्यं, तेन सहैकीभाव इत्यर्थः, तेन भावो भवनं–परिणतिरिति ९ 'भव्यप्रमोदहेतुता' भव्यजनसंतोषकारित्वं १० 'ध्यानसुखयोगः' ध्यानसुखस्य–अशेषसुखातिशायिनः चित्तनिरोधलक्षणस्य योगः ११ 'अतिशयर्द्धिप्राप्तिः' अतिशयर्द्धेः–आमर्षौषध्यादिरूपायाः प्राप्तिः १२ ॥ ततश्च कालेन—

अपूर्वकरणं, क्षपकश्रेणिः, मोहसागरोत्तारः, केवलाभिव्यक्तिः, परमसुखलाभ इति ॥ ५ ॥ (४८६)

अपूर्वाणां–स्थितिघातरसघातगुणश्रेणिगुणसंक्रमापूर्वस्थितिबन्धलक्षणानां पञ्चानामर्थानां प्राच्यगुणस्थानेष्वप्राप्तानां करणं यत्र तदपूर्वकरणम्–अष्टमगुणस्थानकं १३ ततश्च क्षपकस्य–घातिकर्मप्रकृतिक्षयकारिणो यतेः श्रेणिः–मोहनीयादिप्रकृतिक्षयक्रमरूपा संपद्यते, क्षपकश्रेणिक्रमश्चायं–इह परिपक्वसम्यग्दर्शनादिगुणो जीवश्चरमभववर्त्ती अविरतदेशविरतप्रमत्ताप्रमत्तसंय-

पञ्चस्वपि महाकल्याणेषु त्रैलोक्यशङ्करम् । तथैव स्वार्थसंसिद्धया, परं निर्वाणकारणम् ॥ ४५ ॥

पञ्चस्वपि, न पुनरेकस्मिन्नेव क्वचित्, 'महाकल्याणेषु' गर्भाधानजन्मदिनादिषु 'त्रैलोक्यशङ्करं' जगत्त्रयसुखकारि, तीर्थकृत्त्वमित्यनुवर्त्तते, इत्थं परार्थसाधकत्वमुक्त्वा स्वार्थसाधकत्वमाह-'तथैव' त्रैलोक्यसुखकरणप्रकारेण 'स्वार्थसंसिद्धया' क्षायिकसम्यग्दर्शनज्ञानचारित्रनिष्पत्त्या 'परं' प्रधानं 'निर्वाणकारणं' मुक्तिहेतुरिति ॥ ३ ॥

इत्युक्तप्रायं धर्मफलम्, इदानीं तच्छेषमेव उदग्रमनुवर्णयिष्याम इति ॥ १ ॥ (४८२)

सुगममेव, परं 'तच्छेष'मिति धर्मफलशेषम् ॥ १ ॥ एतदेव दर्शयति–

तच्च [सुख] परम्परया प्रकृष्टभावशुद्धेः सामान्यं चरमजन्म तथा तीर्थकृत्त्वं चेति ॥ २ ॥ (४८३)

'तच्च' तत्पुनर्धर्मफलशेषमुदग्रं 'परम्परया' उत्तरोत्तरक्रमेण प्रकृष्टभावशुद्धेः सकाशात्, किमित्याह–'सामान्यं' तीर्थंकरातीर्थंकरयोः समानं 'चरमजन्म' अपश्चिमदेहलाभलक्षणं, 'तथे'ति पक्षान्तरोपक्षेपे 'तीर्थकृत्त्वं' तीर्थंकरभावलक्षणं, चः समुच्चये ॥ २ ॥

तत्राक्लिष्टमनुत्तरं विषयसौख्यं, हीनभावविगमः, उदग्रतरा सम्पत्, प्रभूतोपकारकरणं, आशयविशुद्धिः, धर्मप्रधानता, अवन्ध्यक्रियात्वमिति ॥ ३ ॥ (४८४)

'तत्र' सामान्यतश्चरमजन्मनि 'अक्लिष्टं' परिणामसुन्दरम् 'अनुत्तरं' शेषभोगसौख्येभ्यः प्रधानं 'विषयसौख्यं' शब्दादिसेवालक्षणं १ 'हीनभावविगमः' जातिकुलविभववयोऽवस्थादिन्यूनतारूपहीनत्वविरहः २ 'उदग्रतरा' प्राग्भ-

ततः–श्रद्धामृतास्वादनमिति ॥ २१ ॥ ( ५०२ )

सूक्ष्मभावेष्वेव या श्रद्धा–रुचिः सैवामृतं–त्रिदशभोजनं तस्यास्वादनं हृदयजिव्हया सम्रुपजीवनमिति ॥ २१ ॥

ततः–सदनुष्ठानयोग इति ॥ २२ ॥ ( ५०३ )

सदनुष्ठानस्य–साधुगृहस्थधर्माभ्यासरूपस्य योगः–सम्बन्धः ॥

ततः–परमापायहानिरिति ॥ २३ ॥ ( ५०४ )

' परमा ' प्रकृष्टा ' अपायहानिः ' नरकादिकुगतिप्रवेशलभ्यानर्थसार्थोच्छेदः ॥२३॥ ततोऽपि उपक्रियमाणभव्यप्राणिनां यत् स्यात् तदाह–

सानुबन्धसुखभाव उत्तरोत्तरः प्रकामप्रभूतसत्त्वोपकाराय अवन्ध्यकारणं निवृतेरिति ॥ २४ ॥ (५०५)

सानुबन्धसुखभावः ' उत्तरोत्तरः ' उत्तरेषु–प्रधानेषूत्तरः–प्रधानः प्रकामः–प्रौढः प्रभूतः–अतिबहुः यः सत्त्वोपकारः तस्मै संपद्यते, स च ' अवन्ध्यकारणं ' अवन्ध्यो हेतुः निर्वृतेः–निर्वाणस्य ॥ २४ ॥ निगमयन्नाह–

इति परं परार्थकरणमिति ॥ २५ ॥ ( ५०६ )

' इति ' एवं यथा प्रागुक्तं परं परार्थकरणं तस्य भगवत इति ॥२५॥ साम्प्रतं पुनरप्युभयोः साधारणं धर्मफलमाह–

भवोपग्राहिकर्मविगम इति ॥ २६ ॥ (५०७)

परिपालितपूर्वकोट्यादिप्रमाणसयोगकेवलिपर्याययोरन्ते भवोपग्राहिकर्मणां–वेदनीयायुर्नामगोत्ररूपाणां विगमो-नाशो

निर्वाणबीजलाभभृतो जगत्त्रयस्याप्युपकारः तस्याङ्गना–कारणभावः, भगवतो हि प्रतीत्य तत्तन्निबन्धनाया भक्तिभरनिर्भरा-मरमनुजभृतिप्रभूतसत्त्वसंपादितायाः पूजायाः सकाशात् भूयसां भव्यानां मोक्षानुगुणो महानुपकारः संपद्यते इति ।। १६ ॥

तथा–प्रातिहार्योपयोग इति ॥ १७ ॥ ( ४९८ )

प्रतिहारकर्म प्रातिहार्यं, तच्च अशोकवृक्षादि, यदवाचि–" अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यो ध्वनिश्चामरमासनं च । भामण्डलं दुन्दुभिरातपत्रं, सत्प्रातिहार्याणि जिनेश्वराणाम् ॥ २१५ ॥ " तस्योपयोगः–उपजीवनमिति ॥ १७ ॥

ततः–परं परार्थकरणमिति ॥ १८ ॥ ( ४९९ )

' परं ' प्रकृष्टं परार्थस्य–परमजीजनस्य सर्वसत्त्वस्वभाषापरिणामिन्या पीयूषपानसमधिकानन्ददायिन्या सर्वतोऽपि योजनमानभूमिभागयायिन्या वाण्या अन्यैश्च तैस्तैश्चित्रैरुपायैः करणं–निष्पादनमिति ॥१८॥ एतदेव ' अविच्छेदेन' इत्यादिना ' इति परं परार्थकरणं ' एतदन्तेन सूत्रकदम्बकेन स्फुटीकुर्वन्नाह–

अविच्छेदेन भूयसां मोहान्धकारापनयनं हृद्यैर्वचनभानुभिरिति ॥ १९ ॥ ( ५०० )

अविच्छेदेन–यावज्जीवमपि भूयसाम्–अनेकलक्षकोटिप्रमाणानां भव्यजन्तूनां मोहान्धकारस्य–अज्ञानान्धतमसस्या-पनयनम्–अपसारः हृद्यैः-हृदयङ्गमैः 'वचनभानुभिः' वाक्यकिरणैः॥१९॥ मोहान्धकारे चापनीते यत् स्यात् प्राणिनां तदाह–

सूक्ष्मभावप्रतिपत्तिरिति ॥ २० ॥ ( ५०१ )

सूक्ष्माणाम्–अनिपुणबुद्धिभिरगम्यानां भावानां–जीवादीनां प्रतिपत्तिः–अवबोधः ॥ २० ॥

यथावस्थितं कामभोगजं मनःसमाधिजं वा शर्म किञ्चन लभन्ते तथा अमी संसारिणः सत्त्वाः रागादिदोषवशात् सम्यग्दर्शनादिषु मलीमसरूपतां प्राप्तेषु न रागद्वेषमोहोपशमजं शर्म समासादयन्तीति ॥ १२ ॥ अमुमेवार्थं व्यतिरेकेन आह-

क्षीणेषु न दुःखं, निमित्ताभावादिति ॥ १३ ॥ ( ४९४ )

क्षीणेषु रागादिषु न दुःखं भावसंनिपातजं समुत्पद्यते, कुत इति चेदुच्यते-निमित्ताभावात्--निबन्धननिवृत्तेरिति ॥१३॥ तर्हि किं स्यादित्याह-

आत्यन्तिकभावरोगविगमात् परमेश्वरताऽऽप्तेस्तत्तथास्वभावत्वात् परमसुखभाव इतीति ॥१४॥ (४९५)

आत्यन्तिकः-पुनर्भावाभावेन भावरोगाणां-रागादीनां यो विगमः-समुच्छेदः तस्मात् या परमेश्वरतायाः-चक्रचक्राधिपाद्यैश्वर्यातिशायिन्याः केवलज्ञानादिलक्षणाया आप्तिः-प्राप्तिः तस्याः, परमसुखभाव इत्युत्तरेण योगः, कुत इत्याह-'तत्तथास्वभावत्वात्' तस्य-परमसुखलाभस्य 'तथास्वभावत्वात्' परमेश्वरतारूपत्वात्, परमसुखभावः संपद्यते, इतिः वाक्यपरिसमाप्ताविति ॥ १४ ॥ इत्थं तीर्थकरातीर्थकरयोः सामान्यमनुत्तरं धर्मफलमभिधाय साम्प्रतं तीर्थकृत्त्वलक्षणं तदभिधातुमाह-

देवेन्द्रहर्षजननमिति ॥ १५ ॥ ( ४९६ )

देवेन्द्राणां-चमरशक्रादीनां हर्षस्य-संतोषस्य जननं-संपादनमिति ॥ १५ ॥

तथा-पूजानुग्रहाङ्गतेति ॥ १६ ॥ ( ४९७ )

पूजया-जन्मकालादारभ्याऽऽनिर्वाणप्राप्तेस्तत्तन्निमित्तेन निष्पादितया अमरगिरिशिखरमज्जनादिरूपया योऽनुग्रहो-

अविषयेऽभिष्वङ्गकरणाद्राग इति ॥ ९ ॥ ( ४९० )

'अविषये' प्रकृतिविशरारुतया मतिमतामभिष्वङ्गानर्हे स्त्र्यादौ वस्तुनि 'अभिष्वङ्गकरणाद्' चित्तप्रतिबन्धसंपादनात्, किमित्याह–रागो दोषः ॥९॥

तत्रैवाग्निज्वालाकल्पमात्सर्यापादनाद् द्वेष इति ॥ १० ॥ ( ४९१ )

'तत्रैव' क्वचिदर्थेऽभिष्वङ्गे सति अग्निज्वालाकल्पस्य सम्यक्त्वादिगुणसर्वस्वदाहकतया मात्सर्यस्य–परसम्पत्त्यसहिष्णुभावलक्षणस्य आपादनाद्–विधानात् द्वेषो दोषः ॥ १० ॥

हेयेतरभावाधिगमप्रतिबन्धविधानान्मोह इति ॥ ११ ॥ ( ४९२ )

इह निश्चयनयेन हेयानां–मिथ्यात्वादीनामितरेषां च–उपादेयानां–सम्यग्दर्शनादीनां भावानां व्यवहारतस्तु विषकण्टकादीनां स्रक्चन्दनादीनां च अधिगमस्य–अवबोधस्य प्रतिबन्धविधानात्–स्खलनकरणात् मोहो दोषः ॥ ११ ॥ अथैतेषां भावसंनिपातत्वं समर्थयन्नाह–

सत्स्वेतेषु न यथावस्थितं सुखं, स्वधातुवैषम्यादिति ॥ १२ ॥ ( ४९३ )

सत्स्वेतेषु–रागादिषु 'न' नैव 'यथावस्थितं' पारमार्थिकं सुखं जीवस्य, अत्र हेतुः–'स्वधातुवैषम्यात्' दधति–धारयन्ति जीवस्वरूपमिति धातवः–सम्यग्दर्शनादयो गुणाः स्वस्य–आत्मनो धातवः २ तेषां वैषम्यं–यथावस्थितवस्तुस्वरूपपरिहारेणान्यथारूपतया भवनं तस्मात्, यथा हि वातादिदोषोपघाताद्धातुषु रसासृगादिषु वैषम्यापन्नेषु न देहिनो

पिध्यत इत्याह—

दुःखं चैतत् स्वास्थ्यविनाशनेनेति ॥ ४४ ॥ ( ५२५ )

दुःखं पुनरेतद्—औत्सुक्यं, कथमित्याह—'स्वास्थ्यविनाशनेन' स्वास्थ्यस्य-सर्वसुखमूलस्यापनयनेन ॥ ४४ ॥ यदि नामौत्सुक्यात् स्वास्थ्यविनाशस्तथापि कथमस्य दुःखरूपतेत्याशङ्क्याह—

दुःखशक्त्युद्रेकतोऽस्वास्थ्यसिद्धेरिति ॥ ४५ ॥ ( ५२६ )

दुःखशक्तेः—दुःखबीजरूपाया उद्रेकतः-उद्भवात् सकाशात् अस्वास्थ्यस्य--स्वात्मन्येवास्वस्थतारूपस्य 'सिद्धेः' संभवात् ॥ ४५ ॥ अस्वास्थ्यसिद्धिरपि कथं गम्या इत्याह--

अहितप्रवृत्त्येति ॥ ४६ ॥ ( ५२७ )

'अहितप्रवृत्त्या' अहितेषु-दुःखशक्त्युद्रेकवशसंजातास्वास्थ्यनिवर्त्तकेषु वस्तुषु मनःप्रीतिप्रदप्रमदादिषु प्रवृत्त्या—चेष्टनेन ॥ ४६ ॥ अथ स्वास्थ्यस्वरूपमाह—

स्वास्थ्यं तु निरुत्सुकतया प्रवृत्तेरिति ॥ ४७ ॥ ( ५२८ )

'निरुत्सुकतया' औत्सुक्यपरिहारेण प्रवृत्तेः सर्वकृत्येषु ॥ ४७ ॥ एवं च सति यत्सिद्धं तदाह—

परमस्वास्थ्यहेतुत्वात् परमार्थतः स्वास्थ्यमेवेति ॥ ४८ ॥ ( ५२९ )

स्वास्थ्यम्—अस्वास्थ्यविलक्षणं पुनः

**तथा—न चान्य उपद्रव इति ॥ ३७ ॥ ( ५१८ )**

'न च' नैव अन्यः—तृष्णाबुभुक्षादिः उपद्रवो—व्यसनं ॥ ३७ ॥ तर्हि किं तत्र स्यादित्याशङ्क्याह—

**विशुद्धस्वरूपलाभ इति ॥ ३८ ॥ ( ५१९ )**

विशुद्धं—निर्मलीमसं यत्स्वरूपं तस्य लाभः—प्राप्तिः ॥ ३८ ॥

**तथा—आत्यन्तिकी व्याबाधानिवृत्तिरिति ॥ ३९ ॥ ( ५२० )**

अत्यन्तं भवा आत्यन्तिकी 'व्याबाधानिवृत्तिः' शरीरमानसव्यथाविरहः ॥ ३९ ॥ तामेव विशिनष्टि—

**सा निरुपमं सुखमिति ॥ ४० ॥ ( ५२१ )**

'सा' आत्यन्तिकी व्याबाधानिवृत्तिः 'निरुपमम्' उपमातीतं सुखं ॥ ४० ॥ अत्र हेतुः—

**सर्वत्राप्रवृत्तेरिति ॥ ४१ ॥ ( ५२२ )**

'सर्वत्र' हेये उपादेये च वस्तुनि 'अप्रवृत्तेः' अव्यापारणात् ॥ ४१ ॥ इयमपि कथमित्याह—

**समाप्तकार्यत्वादिति ॥ ४२ ॥ ( ५२३ )**

समाप्तानि—निष्ठितानि कार्याणि यस्य स तथा तद्भावस्तत्त्वं तस्मात् ॥ ४२ ॥ अत्रैवाभ्युच्चयमाह—

**न चैतस्य क्वचिदौत्सुक्यमिति ॥ ४३ ॥ ( ५२४ )**

'न' नैव चः समुच्चये 'एतस्य' निर्वृतस्य जन्तोः क्वचिदर्थे 'औत्सुक्य' काङ्क्षारूपम् ॥४३॥ ननु किमेवमि-

सर्वकालं कर्मवत एव तद्ग्रह इत्याशङ्क्याह-

**तदनादित्वेन तथाभावसिद्धेरिति ॥ ३३ ॥ ( ५१४ )**

तस्य-कर्मणः कृतकत्वेनाप्यनादित्वेन द्वितीयाध्यायमपञ्चितयुक्त्या तथाभावस्य-तद्वत एव तद्ग्रहरूपस्य सिद्धेः- निष्पत्तेरिति ॥ ३३ ॥ ननु-' ज्ञानिनो धर्मतीर्थस्य, कर्त्तारः परमं पदम् । गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥ २१६ ॥ ' इति वचनप्रामाण्यात् कथं नाकर्मणोऽपि जन्मादिग्रह इत्याशङ्क्याह-

**सर्वविप्रमुक्तस्य तु तथास्वभावत्वान्निष्ठितार्थत्वान्न तद्ग्रहणे निमित्तमिति ॥ ३४ ॥ ( ५१५ )**

सर्वेण कर्मणा विप्रमुक्तस्य पुनस्तथास्वभावत्वात्-तत्प्रकाररूपत्वात्, किमित्याह-' निष्ठितार्थत्वात् ' निष्पन्ननिःशेषप्रयोजनत्वाद्धेतोः नैव ' तद्ग्रहणे ' जन्मादिग्रहणे ' निमित्तं ' हेतुः समस्तीति, अयमभिप्रायः-यो हि सर्वैः कर्मभिः सर्वथापि विप्रमुक्तो भवति न तस्य जन्मादिग्रहणे किञ्चिन्निमित्तं समस्ति, निष्ठितार्थत्वेन जन्मादिग्राहकस्वभावाभावात्, यश्च तीर्थनिकारलक्षणो हेतुः कैश्चित्परिकल्प्यते सोऽप्यनुपपन्नः, कषायविकारजन्यत्वात्तस्येति ॥३४॥ एवं च सति यत्सिद्धं तदाह-

**नाजन्मनो जरेति ॥ ३५ ॥ ( ५१६ )**

' न ' नैव ' अजन्मनः ' उत्पादविकलस्य ' जरा ' वयोहानिलक्षणा संपद्यते ॥ ३५ ॥

**एवं च-न मरणभयशक्तिरिति ॥ ३६ ॥ ( ५१७ )**

' न ' इति प्रतिषेधे मरणभयस्य-प्रतीतरूपस्य संबन्धिनी शक्तिः-बीजरूपेति ॥ ३६ ॥

जायते ॥ २६ ॥

ततः–निर्वाणगमनमिति ॥ २७ ॥ ( ५०८ )

निर्वान्ति देहिनोऽस्मिन्निति निर्वाणं–सिद्धिक्षेत्रं जीवस्यैव स्वरूपावस्थानं वा तत्र गमनम्–अवतारः ॥ २७ ॥

तत्र च–पुनर्जन्माद्यभाव इति ॥ २८ ॥ ( ५०९ )

पुनः–द्वितीयतृतीयादिवार यज्जन्मादीनां–जन्मजरामरणप्रभृतीनामनर्थानामभावः–आत्यन्तिकोच्छेदः ॥२८॥ अत्र हेतुः–

बीजाभावतोऽयमिति ॥ २९ ॥ ( ५१० )

बीजस्य–अनन्तरमेव वक्ष्यमाणस्याभावात् अयं–पुनर्जन्माद्यभाव इति ॥ २९॥ बीजमेव व्याचष्टे–

कर्मविपाकस्तदिति ॥ ३० ॥ ( ५११ )

कर्मणां–ज्ञानावरणादीनां विपाकः–उदयः ‘ तत् ’ पुनर्जन्मादिबीजमिति ॥ ३० ॥ न च वक्तव्यमेषोऽपि निर्वाणगतो जीवः सकर्मा भविष्यति इत्याह–

अकर्मा चासाविति ॥ ३१ ॥ ( ५१२ )

‘अकर्मा च’ कर्मविकलश्च ‘असौ’ निर्वाणशरणो जीवः॥३१॥ भवतु नाम अकर्मा, तथापि पुनर्जन्माद्यस्य भविष्यतीत्याह–

तद्वत एव तद्ग्रह इति ॥ ३२ ॥ ( ५१३ )

‘ तद्वत एव ’ कर्मवत एव ‘ तद्ग्रहः ’ पुनर्जन्मादिभावः ॥ ३२ ॥ ननु क्रियमाणत्वेन कर्मण आदिमत्त्वप्रसङ्गेन कथं

कर्मक्षयस्य कार्त्स्न्येन सिद्धत्वप्रथमक्षण एव संजातस्य सर्वक्षणेषु अविशेषात्-अभेदात्॥६०॥ एवं सति यत्सिद्धं तदाह-

इति निरुपमसुखसिद्धिरिति ॥ ६१ ॥ ( ५४२ )

'इति' एवमौत्सुक्यात्यन्तिकनिवृत्तेर्निरुपमसुखसिद्धिः सिद्धानां श्रद्धेया ॥ ६१ ॥ अथोपसंहरन्नाह-

सद्ध्यानवन्हिना जीवो, दग्ध्वा कर्मेन्धनं भुवि। सद्ब्रह्मादिपदैर्गीतं, स याति परमं पदम्॥ ४६ ॥ इति।

'सद्ध्यानवह्निना' शुक्लध्यानलक्षणज्वलज्ज्वलनेन करणभूतेन 'जीवो' भव्यजन्तुविशेषः 'दग्ध्वा' भस्मसात्कृत्य... मानीय 'कर्मेन्धनं' भवोपग्राहिकर्मलक्षणं 'भुवि' मनुष्यक्षेत्रलक्षणायां, किमित्याह-'सद्ब्रह्मादिपदैः' सद्भिः-सुन्दरैः ब्रह्मादिपदैः-ब्रह्मलोकान्तादिभिर्ध्वनिभिर्गीतं-शब्दितं 'सः' आराधितशुद्धसाधुधर्मो जीवो 'याति' प्रतिपद्यते परमं पदमिति ॥ १ ॥ न च वक्तव्यं अकर्मणः कथं गतिरित्याह-

पूर्वाविधवशादेव, तत्स्वभावत्वतस्तथा। अनन्तवीर्ययुक्तत्वात्, समयेनानुगुण्यतः ॥ ४७ ॥ इति।

'पूर्वाविधवशात्' पूर्वं-संसारावस्थायां य आवेधः-आवेशो गमनस्य तस्य वशः तस्मात्, एवेत्यवधारणे, 'तत्स्वभावत्वतः' सः-ऊर्ध्वगमनलक्षणो बन्धनमुक्तत्वेनैरण्डबीजस्येव स्वभावो यस्य स तथा तद्भावस्तत्त्वं तस्मात्, 'तथे'ति हेत्वन्तरसमुच्चये, 'अनन्तवीर्ययुक्तत्वात्' अपारसामर्थ्यसंपन्नत्वात् समयेनैकेन 'आनुगुण्यतः' शैलेश्यवस्थावगाढक्षेत्रमपेक्ष्य समश्रेणितया, परमपदं यातीत्यनुवर्त्तत इति ॥ २ ॥

स तत्र दुःखविरहादत्यन्तसुखसंगतः। तिष्ठत्ययोगो योगीन्द्रवन्द्यस्त्रिजगतीश्वरः ॥ ४८ ॥ इति।

स्वस्वभावनियतो ह्यसौ विनिवृत्तेच्छाप्रपञ्च इति ॥ ५६ ॥ ( ५३७ )

'स्वस्वभावनियतः' स्वकीयस्वरूपमात्रप्रतिष्ठितः 'हिः' यस्माद् 'असौ' भगवान् सिद्धो 'विनिवृत्तेच्छाप्रपञ्चः' अत्यन्तनिवृत्तसर्वार्थगोचरस्पृहाप्रबन्धः ॥ ५६ ॥ आकाशेनापि सह तस्य संबन्धं निराकुर्वन्नाह—

अतोऽकामत्वात्तत्स्वभावत्वान्न लोकान्तक्षेत्राप्तिरास्तिः ॥ ५७ ॥ ( ५३८ )

'अतो' विनिवृत्तेच्छाप्रपञ्चत्वात् यद् अकामत्वं—निरभिलाषत्वं तस्मात् यत् तत्स्वभावत्वं—अर्थान्तरनिरपेक्षत्वं तस्मात् न 'लोकान्तक्षेत्राप्तिः' सिद्धिक्षेत्रावस्थानरूपा आप्तिः—अर्थान्तरेण सह संबन्धः ॥ ५७ ॥ एतदपि भावयति—

औत्सुक्यवृद्धिर्हि लक्षणमस्याः, हानिश्च समयान्तरे इति ॥ ५८ ॥ ( ५३९ )

औत्सुक्यस्य वृद्धिः—प्रकर्षः 'हिः' यस्मात् लक्षणं—स्वरूपमस्याः—अर्थान्तरप्राप्तेः, 'हानिश्च' औत्सुक्यस्यैव भ्रंशः 'समयान्तरे' प्राप्तिसमयादग्रेतनसमयलक्षणे ॥ ५८ ॥ ननु किमिदमौत्सुक्यलक्षणं सिद्धे नास्ति ?, अत आह—

न चैतत्तस्य भगवतः, आकालं तथावस्थितेरिति ॥ ५९ ॥ ( ५४० )

'न च' नैव 'एतद्' अर्थान्तरप्राप्तिलक्षणमनन्तरोक्तं 'तस्य' सिद्धस्य भगवतः, 'आकालं' सर्वमप्यागामिनं कालं यावत् 'तथावस्थितेः' प्रथमसमयादारभ्य 'तथा' तेनैव प्रथमसमयसंपन्नेनैकेन निष्ठितार्थत्वलक्षणेन स्वरूपेणावस्थानात् ॥ ५९ ॥ एतदपि कुत इत्याह—

कर्मक्षयाविशेषादिति ॥ ६० ॥ ( ५४१ )

अथ प्रस्तुतमेवाह—

सुस्वास्थ्यं च परमानन्द इति ॥ ५१ ॥ ( ५३२ )

निरुत्सुकप्रवृत्तिसाध्यस्वास्थ्याद् यदधिकं स्वास्थ्यं तत्सुस्वास्थ्यमुच्यते तदेव परमानन्दो मोक्षसुखलक्षणः ॥ ५१ ॥ कुत इत्याह—

तदन्यनिरपेक्षत्वादिति ॥ ५२ ॥ ( ५३३ )

तस्माद्—आत्मनः सकाशादन्यस्तदन्यः—स्वव्यतिरिक्तः, तन्निरपेक्षत्वात् ॥ ५२ ॥ नन्वन्यापेक्षा किं दुःखरूपा यदेवमुच्यते इत्याह—

अपेक्षाया दुःखरूपत्वादिति ॥ ५३ ॥ ( ५३४ )

प्रतीतार्थमेव ॥ ५३ ॥ एतदेव भावयति—

अर्थान्तरप्राप्त्या हि तन्निवृत्तिर्दुःखत्वेनानिवृत्तिरेवेति ॥ ५४ ॥ ( ५३५ )

अर्थान्तरस्य—इन्द्रियार्थरूपस्य प्राप्त्या—लाभेन हिः यस्मात् तन्निवृत्तिः, किमित्याह—दुःखत्वेनार्थान्तरप्राप्तेरनिवृत्तिरेव दुःखस्येति ॥ ५४ ॥ अथैनां निवृत्तौ निराकुर्वन्नाह—

न चास्यार्थान्तरावाप्तिरिति ॥ ५५ ॥ ( ५३६ )

'न च' न पुनः 'अस्य' सिद्धार्थस्य 'अर्थान्तरावाप्तिः' स्वव्यतिरिक्तभावान्तरसंबन्धः ॥५५॥ एतदेव भावयति—

'परमस्वास्थ्यहेतुत्वात्' चित्तविप्लवपरिहारेण प्रकृष्टस्वभावावस्थाननिमित्तत्वात् 'परमार्थतः'—तत्त्ववृत्त्या 'स्वास्थ्यमेव' निरुत्सुकतया प्रवृत्तिरिति संबध्यते, सा च भगवति केवलिनि समस्ति इति सिद्धं, यदुत न तस्य क्वचिदौत्सुक्यमिति, ननु भवेऽपवर्गे चैकान्ततो निःस्पृहस्य कथं विहितेतरयोरर्थयोरस्य प्रवृत्तिनिवृत्ती स्यातामिति, उच्यते, द्रव्यत एव, पूर्वसंस्कारवशात् कुलालचक्रभ्रमवत् स्याताम् ॥ ४८ ॥ एतद् भावयन्नाह—

भावसारे हि प्रवृत्त्यप्रवृत्ती सर्वत्र प्रधानो व्यवहार इति ॥ ४९ ॥ ५३० ॥

'भावसारे' मानसविकल्पपुरःसरे, हिशब्दः पूर्वोक्तभावनार्थः, प्रवृत्त्यप्रवृत्ती 'सर्वत्र' विहितेतरयोरर्थयोर्विषये, किमित्याह—'प्रधानो' भावरूपः 'व्यवहारो' लोकाचाररूपः, इदमुक्तं भवति—यैव मनःप्रणिधानपूर्विका क्वचिदर्थे प्रवृत्तिर्निवृत्तिर्वा तामेव तात्त्विकीं तत्त्ववेदिनो वदन्ति, न पुनरन्यां, यतोऽनाभोगादिभिः परिपूर्णश्रामण्यक्रियावन्तोऽपि अभव्यादयो न तात्त्विकश्रामण्यक्रियावत्तया समये व्यवहृताः, तथा संमूर्छनजमत्स्यादयः सप्तमनरकपृथिवीप्रायोग्यायुर्बन्धनिमित्तमहारम्भादिपापस्थानवर्त्तिनोऽपि तथाविधभावविकलत्वान्न तदायुर्बन्धं प्रति प्रत्यलीभवन्ति, एवं सयोगिकेवलिनोऽपि सर्वत्र निःस्पृहमनसः पूर्वसंस्काराद्विहितेतरयोरर्थयोः प्रवृत्तिनिवृत्ती कुर्वन्तोऽपि न भावतस्तद्वन्तो व्यवह्रियन्ते इति ॥४९॥ अत्रैवाभ्युच्चयमाह—

प्रतीतिसिद्धश्चायं सद्योगसचेतसामिति ॥ ५० ॥ ( ५३१ )

'प्रतीतिसिद्धः' स्वानुभवसंवेदितः, चः समुच्चये, 'अयं' पूर्वोक्तोऽर्थः सद्योगेन-शुद्धध्यानलक्षणेन ये सचेतसः—सचित्ताः तेषां, संपन्नध्यानरूपामलमानसाः महामुनयः स्वयमेवामुमर्थं प्रतिपद्यन्ते, न पुनरत्र परोपदेशमाकाङ्क्षंते इति ॥५०॥

योग्यो ह्येवंविधः प्रोक्तो,
जिनैः परहितोद्यतैः ।
फलसाधनभावेन,
नातोऽन्यः परमार्थतः ॥ १५ ॥

इति सद्धर्मग्रहणार्ह उक्तः, साम्प्रतं तत्प्रदानविधिमनुवर्णयिष्याम इति १ (१३४)

धर्मग्रहणं हि सत्प्रतिपत्तिमद्भिमलभावकरणमिति २ (१३५)

तच्च प्रायो जिनवचनतो विधिनेति ३ (१३६)

इति प्रदानफलवत्तेति ४ (१३७)

सति सम्यग्दर्शने न्याय्यमणुव्रतादीनां ग्रहणं, नान्यथेति ५ (१३८)

जिनवचनश्रवणादेः कर्मक्षयोपशमादितः सम्यग्दर्शनमिति ६ (१३९)

प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं तदिति ७ (१४०)

उत्तमधर्मप्रतिपत्त्यसहिष्णोस्तत्कथनपूर्वमुपस्थितस्य विधिनाऽणुव्रतादिदानमिति ८ (१४१)

सहिष्णोः प्रयोगेऽन्तराय इति ९ (१४२)

अनुमतिश्चेतरत्रेति १० (१४३)

अकथन उभयाफल आज्ञाभङ्ग इति ११ (१४४)

भगवद्वचनप्रामाण्यादुपस्थितदाने दोषाभाव इति १२ (१४५)

गृहपतिपुत्रमोक्षज्ञातादिति १३ (१४६)

योगवंदननिमित्तदिगाकारशुद्धिविधिरिति १४ (१४७)

तथा उचितोपचारश्चेति १५ (१४८)

स्थूलप्राणातिपातादिभ्यो विरतिरणुव्रतानि पञ्चेति १६ (१४९)

तथा–दिग्व्रतभोगोपभोगमानानर्थदण्डविरतयस्त्रीणि गुणव्रतानीति १७ (१५०)

तथा–सामायिकदेशावकाशिकपोषधोपवासातिथिसंविभागाश्चत्वारि शिक्षापदानीति १८ (१५१)

ततश्च–एतदारोपणं दानं यथाऽर्हं, साकल्यवैकल्याभ्यामिति १९ (१५२)

गृहीतेष्वनतिचारपालनमिति २० (१५३)

धर्मस्य
दानप-
तिचारः
चर्या च
अध्या-
यः ३

तथा—आत्मकृतस्य देहेनेति ६२(१२०)

दृष्टेष्टबाधेति ६३ (१२१)

अतोऽन्यथैतत्सिद्धिरिति तत्त्ववाद इति ६४ (१२२)

परिणामपरीक्षेति ६५ (१२३)

शुद्धे बन्धभेदकथनमिति ६६ (१२४)

तथा—वरबोधिलाभप्ररूपणेति ६७ (१२५)

तथाभव्यत्वादितोऽसाविति ६८ (१२६)

ग्रन्थिभेदे नात्यन्तसंक्लेश इति ६९ (१२७)

न भूयस्तद्बन्धनमिति ७० (१२८)

तथा—असत्यपाये न दुर्गतिरिति ७१ (१२९)

तथा—विशुद्धेश्चारित्रमिति ७२ (१३०)

भावनातो रागादिक्षय इति ७३(१३१)

तद्भावेऽपवर्ग इति ७४ (१३२)

स आत्यन्तिको दुःखविगम इति ७५ (१३३)

एवं संवेगकृद्धर्म,
आख्येयो मुनिना परः ।
यथाबोधं हि शुश्रूषो-
र्भावितेन महात्मना ॥ १० ॥
अबोधेऽपि फलं प्रोक्तं,
श्रोतॄणां मुनिसत्तमैः ।
कथकस्य विधानेन,
नियमाच्छुद्धचेतसः ॥ ११ ॥
नोपकारो जगत्यस्मि-
स्तादृशो विद्यते क्वचित् ।
यादृशी दुःखविच्छेदा-
द्देहिनां धर्मदेशना ॥ १२ ॥

---

# अथ तृतीयः अध्यायः

सद्धर्मश्रवणादेवं,
नरो विगतकल्मषः ।
ज्ञाततत्त्वो महासत्त्वः,
परं संवेगमागतः ॥ १३ ॥
धर्मोपादेयतां ज्ञात्वा,
संजातेच्छोऽत्र भावतः ।
दृढं स्वशक्तिमालोच्य,
ग्रहणे संप्रवर्त्तते ॥ १४ ॥

तत्सम्भवपालनाचेष्टोक्तिश्छेद इति ३६ (९४)

उभयनिबन्धनभाववादस्ताप इति ३७ (९५)

अमीषामन्तरदर्शनमिति ३८ (९६)

कषच्छेदयोरयत्न इति ३९ (९७)

तद्भावेऽपि तापाभावेऽभाव इति ४० (९८)

तच्छुद्धौ हि तत्साफल्यमिति ४१ (९९)

फलवन्तौ च तौ वास्तवाविति ४२ (१००)

अन्यथा याचितकमण्डनमिति ४३ (१०१)

नातत्त्ववेदिवादः सम्यग्वाद इति ४४ (१०२)

बन्धमोक्षोपपत्तितस्तच्छुद्धिरिति ४५ (१०३)

इयं बध्यमानबन्धनभाव इति ४६ (१०४)

कल्पनामात्रमन्यथेति ४७ (१०५)

बध्यमान आत्मा बन्धनं वस्तुसत् कर्मेति ४८ (१०६)

हिंसादयस्तद्योगहेतवः, तदितरे तदितरस्येति ४९ (१०७)

प्रवाहतोऽनादिमानिति ५० (१०८)

कृतकत्वेऽप्यतीतकालवदुपपत्तिरिति ५१ (१०९)

वर्त्तमानताकल्पं कृतकत्वमिति ५२ (११०)

परिणामिन्यात्मनि हिंसादयो, भिन्नाभिन्ने च देहादिति ५३ (१११)

अन्यथा तदयोग इति ५४ (११२)

नित्य एवाविकारतोऽसंभवादिति ५५ (११३)

तथा—अनित्ये चापराहिंसनेनेति ५६ (११४)

तथा—भिन्न एव देहान्न स्पृष्टवेदनमिति ५७ (११५)

तथा—निरर्थकश्चानुग्रह इति ५८ (११६)

अभिन्न एवामरणं वैकल्यायोगादिति ५९ (११७)

मरणे परलोकाभाव इति ६० (११८)

तथा—देहकृतस्यात्मनाऽनुपभोग इति ६१ (११९)

इति सद्धर्मदेशनार्हं उक्तः, इदानीं तद्विधिमनुवर्तयिष्याम इति १ (५९)

तत्प्रकृतिदेवताधिमुक्तिज्ञानमिति २ (६०)

तथा–साधारणगुणप्रशंसेति ३ (६१)

तथा–सम्यक् तदधिकाख्यानमिति ४ (६२)

तथा–अबोधेऽप्यनिन्देति ५ (६३)

शुश्रूपाभावकरणमिति ६ (६४)

तथा–भूयो भूय उपदेश इति ७ (६५)

तथा–बोधे प्रज्ञोपवर्णनमिति ८ (६६)

तथा–तन्त्रावतार इति ९ (६७)

तथा–प्रयोग आक्षेपण्या इति १० (६८)

तथा–ज्ञानाद्याचारकथनमिति ११ ॥ (६९)

तथा–निरीहशक्यपालनेति १२ (७०)

तथा–अशक्ये भावप्रतिपत्तिरिति १३ (७१)

तथा–पालनोपायोपदेश इति १४ (७२)

तथा–फलप्ररूपणेति १५ (७३)

देवर्द्धिवर्णनमिति १६ (७४)

तथा–सुकुलागमनोक्तिरिति १७ (७५)

तथा–कल्याणपरम्पराख्यानमिति १८ (७६)

तथा–असदाचारगर्हेति १९ (७७)

तथा–तत्स्वरूपकथनमिति २० (७८)

तथा–स्वयं परिहार इति २१ (७९)

तथा–ऋजुभावाऽऽसेवनमिति २२ (८०)

तथा–अपायहेतुत्वदेशनेति २३ (८१)

नारकदुःखोपवर्णनमिति २४ (८२)

तथा–दुष्कुलजन्मप्रशस्तिरिति २५ (८३)

दुःखपरम्परानिवेदनमिति २६ (८४)

तथा–उपायतो मोहनिन्देति २७ (८५)

तथा–सज्ज्ञानप्रशंसनमिति २८ (८६)

तथा–पुरुषकारसत्कथेति २९ (८७)

तथा–वीर्यर्द्धिवर्णनमिति ३० (८८)

तथा–परिणते गम्भीरदेशनायोग इति ३१ (८९)

श्रुतधर्मकथनमिति ३२ (९०)

बहुत्वात्परीक्षावतार इति ३३ (९१)

कषादिप्ररूपणेति ३४ (९२)

विधिप्रतिषेधौ कष इति ३५ (९३)

तथा–हीनेषु हीनक्रम इति (४७)

तथा–अतिसङ्गवर्जनमिति २५ (४८)

तथा–वृत्तस्थज्ञानवृद्धसेवेति २६ (४९)

तथा–परस्परानुपघातेनान्योऽन्यानुबद्धत्रिवर्गप्रतिपत्तिरिति २७ (५०)

तथा–अन्यतरबाधासंभवे मूलाबाधेति (५१)

तथा–बलाबलापेक्षणमिति २८ (५२)

तथा–अनुबन्धे प्रयत्न इति (५३)

तथा–कालोचितापेक्षेति २९ (५४)

तथा–प्रत्यहं धर्मश्रवणमिति ३०(५५)

तथा–सर्वत्रानभिनिवेश इति ३१ (५६)

तथा–गुणपक्षपातितेति ३२ (५७)

तथा–ऊहापोहादियोग ३३ इतीति ३३ (५८)

एवं स्वधर्मसंयुक्तं,
सद्गार्हस्थ्यं करोति यः ।
लोकद्वयेऽप्यसौ धीमान्,
सुखमाप्नोत्यनिन्दितम् ॥ ४ ॥
दुर्लभं प्राप्य मानुष्यं,
विधेयं हितमात्मनः ।
करोत्यकाण्ड एवेह,
मृत्युः सर्वं न किञ्चन ॥ ५ ॥
सत्येतस्मिन्नसारासु,
संपत्स्वविहिताग्रहः ।
पर्यन्तदारुणामुच्चै-
र्धर्मः कार्यो महात्मभिः ॥६॥ इति॥

इति प्रथमोऽध्यायः

## अथ द्वितीयोऽध्यायः ।

प्रायः सद्धर्मबीजानि,
गृहिष्वेवंविधेष्वलम् ।
रोहन्ति विधिनोप्तानि,
यथा बीजानि सत्क्षितौ ॥७॥ इति॥
बीजनाशो यथाऽभूमौ,
प्ररोहो वेह निष्फलः ।
तथा सद्धर्मबीजाना-
मपात्रेषु विदुर्बुधाः ॥ ८ ॥
न साधयति यः सम्यग्,
अज्ञः स्वल्पं चिकीर्षितम् ।
अयोग्यत्वात्कथं मूढः,
स महत्साधयिष्यति ? ॥९॥ इति॥

तथा—दृष्टादृष्टबाधाभीतता इति३ (१३)

तथा—शिष्टचरितप्रशंसनमिति४ (१४)

तथा—अरिषड्वर्गत्यागेनाविरुद्धार्थप्रतिपत्त्येन्द्रियजय इति ५ (१५)

तथा—उपप्लुतस्थानत्याग इति६ (१६)

तथा—स्वयोग्यस्याऽऽश्रयणमिति७(१७)

तथा—प्रधानसाधुपरिग्रह इति ८ (१८)

तथा—स्थाने गृहकरणमिति ९ (१९)

अतिप्रकटातिगुप्तमस्थानमनुचितप्रातिवेश्यं चेति (२०)

लक्षणोपेतगृहवास इति (२१)

निमित्तपरीक्षेति (२२)

तथा—अनेकनिर्गमादिवर्जनमिति (२३)

तथा—विभवाद्यनुरूपो वेषो विरुद्धत्यागेनेति १० (२४)

तथा—आयोचितो व्यय इति११ (२५)

तथा—प्रसिद्धदेशाचारपालनमिति १२ (२६)

तथा—गर्हितेषु गाढमप्रवृत्तिरिति १३ (२७)

तथा—सर्वेष्ववर्णवादत्यागो विशेषतो राजादिष्विति १४ (२८)

तथा—असदाचारैरसंसर्ग इति (२९)

संसर्गः सदाचारैरिति १५ (३०)

तथा—मातापितृपूजेति १६ (३१)

तथा—अनुद्वेजनीया प्रवृत्तिरिति (३२)

तथा—भर्तव्यभरणमिति १७ (३४)

तथा—तस्य यथोचितं विनियोग इति (३५)

तथा—तत्प्रयोजनेषु बद्धलक्षतेति (३६)

तथा—अपायपरिरक्षोद्योग इति (३७)

तथा—गर्ह्ये ज्ञानस्वगौरवरक्षे इति(३८)

तथा—देवातिथिदीनप्रतिपत्तिरिति१८ (३९)

तदौचित्याबाधनमुत्तमनिदर्शनेनेति ॥ (४०)

तथा—सात्म्यतः कालभोजनमिति १९ (४१)

तथा—लौल्यत्याग इति २० (४२)

तथा—अजीर्णे अभोजनमिति २१(४३)

तथा—बलापाये प्रतिक्रियेति २२ (४४)

तथा—अदेशकालचर्यापरिहार इति २३ (४५)

तथा—यथोचितलोकयात्रेति२४ (४६)

# श्रीधर्मबिन्दुसूत्राणि.



अथ प्रथमोऽध्यायः

प्रणम्य परमात्मानं,
समुद्धृत्य श्रुतार्णवात् ।
धर्मबिन्दुं प्रवक्ष्यामि,
तोयबिन्दुमिवोदधेः ॥ १ ॥
धनदो धनार्थिनां प्रोक्तः,
कामिनां सर्वकामदः ।
धर्म एवापवर्गस्य,
पारम्पर्येण साधकः ॥ २ ॥
वचनाद्यदनुष्ठान-
मविरुद्धाद्यथोदितम् ।
मैत्र्यादिभावसंयुक्तं,
तद्धर्म इति कीर्त्यते ॥ ३ ॥

सोऽयमनुष्ठातृभेदात् द्विविधो—गृहस्थधर्मो यतिधर्मश्चेति (१)

तत्र च गृहस्थधर्मोऽपि द्विविधः—सामान्यतो विशेषतश्चेति (२)

तत्र सामान्यतो गृहस्थधर्मः कुलक्रमागतमनिन्द्यं विभवाद्यपेक्षया न्यायतोऽनुष्ठानमिति (३)

न्यायोपात्तं हि वित्तमुभयलोकहितायेति (४)

अनभिशङ्कनीयतया परिभोगाद् विधिना तीर्थगमनाच्चेति (५)

अहितायैवान्यदिति (६)

तदनपायित्वेऽपि मत्स्यादिगलादिवद्विपाकदारुणत्वात् इति (७)

न्याय एव ह्यर्थाप्त्युपनिपत्परेति समयविद इति (८)

ततो हि नियमतः प्रतिबन्धककर्मविगम इति (९)

सत्यस्मिन्नायत्यामर्थसिद्धिरिति (१०)

अतोऽन्यथाऽपि प्रवृत्तौ पाक्षिकोऽर्थलाभो निःसंशयस्त्वनर्थ इति ? (११)

तथा—समानकुलशीलादिभिरगोत्रजैर्वैवाह्यमन्यत्र बहुविरुद्धेभ्य इति२ (१२)

'सः' अनन्तरोक्तो जीवः 'तत्र' सिद्धिक्षेत्रे 'दुःखविरहात्' शारीरमानसबाधावैधुर्यात्, किमित्याह–'अत्यन्तसुखसंगतः' आत्यन्तिकैकान्तिकशर्मसागरोदरमध्यमग्नस्तिष्ठति 'अयोगो' मनोवाक्कायव्यापारविकलः 'योगीन्द्रवन्द्यो' योगिप्रधानमाननीयः, अत एव 'त्रिजगतीश्वरः' द्रव्यभावापेक्षया सर्वलोकोपरिभागवर्त्तितया जगत्त्रयपरमेश्वर इति ॥ ६६ ॥ इति श्रीमुनिचन्द्रसूरिविरचितायां धर्मविन्दुप्रकरणवृत्तौ विशेषतो धर्मफलविधिरष्टमोऽध्यायः समाप्तः ॥

नाविःकर्त्तुमुदारतां निजधियो वाचां न वा चातुरी–मन्येनापि च कारणेन न कृता वृत्तिर्मयाऽसौ परम् ।
तत्त्वाभ्यासरसादुपात्तसुकृतोऽन्यत्रापि जन्मन्यहं, सर्वादीनवहानितोऽमलमना भूयासमुच्चैरिति ॥ १ ॥

इति श्रीमुनिचन्द्रसूरिविरचिता धर्मविन्दुप्रकरणवृत्तिः समाप्ता ।

प्रत्यक्षरं निरूप्यास्या, ग्रन्थमानं विनिश्चितम् । अनुष्टुभां सहस्राणि, त्रीणि पूर्णानि बुध्यताम् ॥ १ ॥

इति श्रीमद्धरिभद्राचार्यकृतं श्रीमन्मुनिचन्द्राचार्यविहितवृत्तियुतं
श्रीधर्मविन्दुनामकं प्रकरणं समाप्तम्

तथा-यथोचितं गुणवृद्धिरिति ९२ (२२५)

तथा-सत्त्वादिषु मैत्र्यादियोग इतीति ९३ (२२६)

विशेषतो गृहस्थस्य,
धर्म उक्तो जिनोत्तमैः ।
एवं सद्भावनासारः,
परं चारित्रकारणम् ॥ १६ ॥
पदंपदेन मेधावी,
यथाऽऽरोहति पर्वतम् ।
सम्यक् तथैव नियमा-
द्धीरश्चारित्रपर्वतम् ॥ १७ ॥
स्तोकान् गुणान् समाराध्य,
वहूनामपि जायते ।
यस्मादाराधनायेग्य-
स्तस्मादादावयं मतः ॥ १८ ॥इति॥

—•—

## अथ चतुर्थः अध्यायः



साम्प्रतं चतुर्थ आरभ्यते, तस्य चेदमादिसूत्रम्—

एवं विधिसमायुक्तः,
सेवमानो गृहाश्रमम् ।
चारित्रमोहनीयेन,
मुच्यते पापकर्मणा ॥ १९ ॥
सदाज्ञाऽऽराधनायोगा-
द्भावशुद्धेर्नियोगतः ।
उपायसंप्रवृत्तेश्च,
सम्यक्चारित्ररागतः ॥ २० ॥
विशुद्धं सदनुष्ठानं,
स्तोकमप्यर्हतां मतम् ।
तत्त्वेन तेन च प्रत्या-
ख्यानं ज्ञात्वा सुवह्वपि ॥ २१ ॥

इति विशेषतो गृहस्थधर्म उक्तः, साम्प्रतं यतिधर्मावसर इति यतिमनुवर्णयिष्याम इति १ (२२७)

अर्हः अर्हसमीपे विधिप्रव्रजितो यतिरिति २ (२२८)

अथ प्रव्रज्यार्हः—आर्यदेशोत्पन्नः १ विशिष्टजातिकुलान्वितः २ क्षीणप्रायकर्ममलः ३ तत एव विमलबुद्धिः ४ दुर्लभं मानुष्यं, जन्म मरणनिमित्तं, संपदश्चपलाः

तत्तो–धर्मप्रधानो व्यवहार इति ६४ (१९७)

तथा–द्रव्ये संतोषपर (प्रधान) तेति ६५ (१९८)

तथा–धर्मे धनबुद्धिरिति ६६ (१९९)

तथा–शासनोन्नतिकरणमिति ६७ (२००)

तथा–विभवोचितं विधिना क्षेत्रदानमिति ६८ (२०१)

सत्कारादिर्विधिर्निःसङ्गता चेति ६९ (२०२)

वीतरागधर्मसाधवः क्षेत्रमिति ७० (२०३)

तथा–दुःखितेष्वनुकम्पा यथाशक्ति द्रव्यतो भावतश्चेति ७१ (२०४)

तथा-लोकापवादभीरुतेति ७२(२०५)

तथा-गुरुलाघवापेक्षणमिति ७३(२०६)

बहुगुणे प्रवृत्तिरिति ७४ (२०७)

तथा–चैत्यादिविधिपूजापुरःसरं भोजनमिति ७५ (२०८)

तथा-तदन्वेव प्रत्याख्यानक्रियेति ७६ (२०९)

तथा-शरीरस्थितौ प्रयत्न इति ७७ (२१०)

तथा-तदुत्तरकार्यचिन्तेति ७८(२११)

तथा-कुशलभावनायां प्रबन्ध इति ७९ (२१२)

तथा-शिष्टचरितश्रवणमिति ८० (२१३)

तथा-सान्ध्यविधिपालनेति ८१(२१४

यथोचितं तत्प्रतिपत्तिरिति ८२(२१५

पूजापुरस्सरं चैत्यादिवन्दनमिति ८३ (२१६)

तथा-साधुविश्रामणक्रियेति ८४(२१७)

तथा-योगाभ्यास इति ८५ (२१८)

तथा-नमस्कारादिचिन्तनमिति ८६ (२१९)

तथा-प्रशस्तभावक्रियेति ८७ (२२०)

तथा-भवस्थितिप्रेक्षणमिति ८८ (२२१)

तदनु तन्नैर्गुण्यभावनेति ८९ (२२२)

तथा-अपवर्गालोचनमिति ९० (२२३)

तथा-श्रामण्यानुराग इति ९१ (२२४)

विहितानुष्ठानवीर्यतस्तज्जय इति ३७ (१७०)

अत एव तस्मिन् यत्न इति ३८ (१७१)

सामान्यचर्याऽस्येति ३९ (१७२)

समानधार्मिकमध्ये वास इति ४० (१७३)

तथा–वात्सल्यमेतेष्विति ४१ (१७४)

तथा–धर्मचिन्तया स्वपनमिति ४२ (१७५)

तथा–नमस्कारेणावबोध इति ४३ (१७६)

तथा–प्रयत्नकृतावश्यकस्य विधिना चैत्यादिवन्दनमिति ४४ (१७७)

तथा–सम्यक्प्रत्याख्यानक्रियेति ४५ (१७८)

तथा–यथोचितं चैत्यगृहगमनमिति ४६ (१७९)

तथा–विधिनाऽनुप्रवेश इति ४७ (१८०)

तत्र च–उचितोपचारकरणमिति ४८ (१८१)

ततो–भावतः स्तवपाठ इति ४९ (१८२)

ततः–चैत्यसाधुवन्दनमिति ५० (१८३)

ततः–गुरुसमीपे प्रत्याख्यानाभिव्यक्तिरिति ५१ (१८४)

ततो–जिनवचनश्रवणे नियोग इति ५२ (१८५)

ततः–सम्यक् तदर्थालोचनमिति ५३ (१८६)

ततः–आगमैकपरतेति ५४ (१८७)

ततः–श्रुतशक्यपालनमिति ५५ (१८८)

तथा–अशक्ये भावप्रतिबन्ध इति ५६ (१८९)

तथा–तत्कर्त्तृषु प्रशंसोपचाराविति ५७ (१९०)

तथा–निपुणभावचिन्तनमिति ५८ (१९१)

तथा–गुरुसमीपे प्रश्न इति ५९ (१९२)

तथा–निर्णयावधारणमिति ६० (१९३)

तथा–ग्लानादिकार्याभियोग इति ६१ (१९४)

तथा–कृताकृतप्रत्युपेक्षेति ६२ (१९५)

ततश्च–उचितवेलयाऽऽगमनमिति ६३ (१९६)

शङ्का १ काङ्क्षा २ विचिकित्सा ३-ऽन्यदृष्टिप्रशंसासंस्तवाः ४–५ सम्यग्दृष्टेरविचारा इति.२१ (१५४)

तथा–व्रतशीलेषु पञ्च पञ्च यथाक्रममिति २२ (१५५)

बन्ध १ वध २ च्छविच्छेदा ३ तिभारारोपणा ४ऽन्नपाननिरोधा ५ इति २३ (१५६)

मिथ्योपदेश १ रहस्याभ्याख्यान २-कूटलेखक्रिया ३ न्यासापहार ४ स्वदारमन्त्रभेदा ५ इति२४ (१५७)

स्तेनप्रयोग १ तदाहृतादान २ विरुद्धराज्यातिक्रम ३ हीनाधिकमानोन्मान ४-प्रतिरूपकव्यवहारा ५ इति २५ (१५८)

परविवाहकरणे १ त्वरपरिगृहीता-२ऽपरिगृहीतागमना ३ नङ्गक्रीडा ४ तीव्रकामाभिलाषा ५. इति २६ (१५९)

क्षेत्रवास्तु १ हिरण्यसुवर्ण २ धनधान्य-३ दासीदास ४ कुप्यप्रमाणातिक्रमा ५ इति २७ (१६०)

ऊर्ध्वाधस्तिर्यग्व्यतिक्रम ३ क्षेत्रवृद्धि-४ स्मृत्यन्तर्धानानीति ५ २८ (१६१)

सचित्त १ संबद्ध २ तत्संमिश्रा ३ भिषव ४ दुष्पक्वाहारा ५ इति २९ (१६२)

कन्दर्प १ कौकुच्य २ मौखर्या ३ समीक्ष्याधिकरणो ४ पभोगाधिकत्वानीति ५ । ३० (१६३)

योगदुष्प्रणिधाना ३ नादर ४ स्मृत्यनुपस्थापनानीति ५ । ३१ (१६४)

आनयन १ प्रेष्यप्रयोग २ शब्द ३-रूपानुपात ४ पुद्गलप्रक्षेपा ५ इति ३२ ॥१६५॥

अप्रत्युपेक्षिताप्रमार्जितोत्सर्गा १ऽऽदाननिक्षेप २ संस्तारोपक्रमणा ३ नादर ४-स्मृत्यनुपस्थापनानीति ५ । ३३ (१६६)

सचित्तनिक्षेप १ पिधान २ परव्यपदेश ३ मात्सर्य ४ कालातिक्रमा ५ इति ३४ (१६७)

एतद्रहिताणुव्रतादिपालनं विशेषतो गृहस्थधर्म इति ३५ (१६८)

क्लिष्टकर्मोदयादतिचारा इति ३६ (१६९)

तथा–भिक्षाभोजनमिति १२ (२८१)
तथा–आघाताद्यदृष्टिरिति १३(२८२)
तथा–तत्कथाऽश्रवणमिति १४(२८३)
तथा–अरक्तद्विष्टतेति १५ (२८४)
तथा–ग्लानादिप्रतिपत्तिरिति १६ (२८५)
तथा–परोद्वेगाहेतुतेति १७ (२८६)
भावतः प्रयत्न इति १८ (२८७)
तथा–अशक्ये बहिश्चार इति १९ (२८८)
तथा-अस्थानाभाषणमिति २०(२८९)
तथा-स्खलितप्रतिपत्तिरिति २१ (२९०)

तथा-पारुष्यपरित्याग इति २२(२९१)
तथा–सर्वत्रापिशुनतेति २३ (२९२)
तथा-विकथावर्जनमिति २४ (२९३)
तथा-उपयोगप्रधानतेति २५ (२९४)
तथा-निश्चितहितोक्तिरिति २६(२९५)
तथा-प्रतिपन्नानुपेक्षेति २७ (२९६)
तथा-असत्प्रलापाश्रुतिरिति २८ (२९७)
तथा-अभिनिवेशत्याग इति २९ (२९८)
तथा-अनुचिताग्रहणमिति ३०(२९९)
तथा-उचिते अनुज्ञापनेति ३१(३००)
तथा-निमित्तोपयोग इति ३२(३०१)
अयोग्येऽग्रहणमिति ३३ (३०२)

तथा-अन्ययोग्यस्य ग्रह इति ३४ (३०३)
गुरोर्निवेदनमिति ३५ (३०४)
स्वयमदानमिति ३६ (३०५)
तदाज्ञया प्रवृत्तिरिति ३७ (३०६)
उचितच्छन्दनमिति ३८ (३०७)
धर्मायोपभोग इति ३९ (३०८)
तथा-विविक्तवसतिसेवेति ४०(३०९)
तत्र-स्त्रीकथापरिहार इति ४१(३१०)
निषद्यानुपवेशनमिति ४२ (३११)
इन्द्रियाप्रयोग इति ४३ (३१२)
कुड्यान्तस्थदाम्पत्यवर्जनमिति ४४ (३१३)
पूर्वक्रीडितास्मृतिरिति ४५ (३१४)

तथा–तपोयोगकारणं चेतीति ४३ (२६९)

एवं यः शुद्धयोगेन,
परित्यज्य गृहाश्रमम् ।
संयमे रमते नित्यं,
स यतिः परिकीर्तितः ॥ २२ ॥

एतत्तु संभवत्यस्य,
सदुपायप्रवृत्तितः ।
अनुपायात्तु साध्यस्य,
सिद्धिं नेच्छन्ति पण्डिताः ॥२३॥

यस्तु नैवंविधो मोहात्,
चेष्टते शास्त्रबाधया ।
स तादृग्लिङ्गयुक्तोऽपि,
न गृही न यतिर्मतः ॥ २४ ॥

---

## अथ पञ्चमः अध्यायः

वाहुभ्यां दुस्तरो यद्वत्,
क्रूरनक्रो महोदधिः ।
यतित्वं दुष्करं तद्वत्,
इत्याहुस्तत्त्ववेदिनः ॥ २५ ॥

अपवर्गः फलं यस्य,
जन्ममृत्यादिवर्जितः ।
परमानन्दरूपश्च,
दुष्करं तत् न चाद्भुतम् ॥ २६ ॥

भवस्वरूपविज्ञानात्,
तद्विरागाच्च तत्त्वतः ।
अपवर्गानुरागाच्च,
स्यादेतन्नान्यथा क्वचित् ॥ २७ ॥

---

इत्युक्तो यतिः, अधुनाऽस्य धर्ममनुवर्णयिष्यामः, यतिधर्मो द्विविधः-सापेक्षयतिधर्मो निरपेक्षयतिधर्मश्चेति १ (२७०)

तत्र सापेक्षयतिधर्म इति २ (२७१)

यथा–गुर्वन्तेवासितेति ३ (२७२)

तथा–तद्भक्तिबहुमानाविति ४(२७३)

तथा–सदाऽऽज्ञाकरणमिति ५ (२७४)

तथा–विधिना प्रवृत्तिरिति ६ (२७५)

तथा–आत्मानुग्रहचिन्तनमिति ७ (२७६)

तथा–व्रतपरिणामरक्षेति ८ (२७७)

तथा–आरम्भत्याग इति ९ (२७८)

पृथिव्याद्यसंघट्टनमिति १० (२७९)

तथा–त्रिधेर्याशुद्धिः ११ (२८०)

न दोषो योग्यतायामिति विश्व इति १८ (२४४)

अन्यतरवैकल्येऽपि गुणबाहुल्यमेव सा तत्त्वत इति सुरगुरुरिति १९ (२४५)

सर्वमुपपन्नमिति सिद्धसेन इति २० (२४६)

भवन्ति त्वल्पा अपि असाधारणगुणाः कल्याणोत्कर्षसाधका इति २१ (२४७)

उपस्थितस्य प्रश्नाचारकथनपरीक्षादिर्विधिरिति २२ (२४८)

तथा—गुरुजनाद्यनुज्ञेति २३ (२४९)

तथा तथोपधायोग इति २४ (२५०)

दुःस्वप्नादिकथनमिति २५ (२५१)

तथा—विपर्ययलिङ्गसेवेति २६ (२५२)

दैवज्ञैस्तथा तथा निवेदनमिति २७ (२५३)

न धर्मे मायेति २८ (२५४)

उभयहितमेतदिति २९ (२५५)

यथाशक्ति सौविहित्यापादनमिति ३० (२५६)

ग्लानौषधादिज्ञातात्त्याग इति ३१ (२५७)

तथा—गुरुनिवेदनमिति ३२ (२५८)

अनुग्रहधियाऽभ्युपगम इति ३३(२५९)

तथा—निमित्तपरीक्षेति ३४ (२६०)

तथा—उचितकालापेक्षणमिति ३५ (२६१)

तथा—उपायतः कायपालनमिति ३६ (२६२)

तथा—भाववृद्धिकरणमिति ३७(२६३)

तथा—अनन्तरानुष्ठानोपदेश इति ३८ (२६४)

तथा—शक्तितस्त्यागतपसी इति ३९ (२६५)

तथा—क्षेत्रादिशुद्धौ वन्दनादिशुद्ध्या शीलारोपणमिति ४० (२६६)

असङ्गतया समशत्रुमित्रता शीलमिति ४१ (२६७)

अतोऽनुष्ठानाद्यद्भा(तिभा) वसम्भव इति ४२ (२६८)

विषया दुःखहेतवः, संयोगे वियोगः,प्रतिक्षणं मरणं, दारुणो विपाकः,इत्यवगतसंसारनैर्गुण्यः ५ तत एव तद्विरक्तः ६ प्रतनुकषायः ७ अल्पहास्यादिः ८ कृतज्ञः ९ विनीतः १० प्रागपि राजामात्यपौरजनबहुमतः ११ अद्रोहकारी १२ कल्याणांगः १३ श्राद्धः १४ स्थिरः १५ समुपसंपन्न १६ श्चेति ३ (२२९)

गुरुपदार्हस्तु इत्थंभूत एव--विधिप्रतिपन्नप्रव्रज्यः १ समुपासितगुरुकुलः २ अस्खलितशीलः ३ सम्यगधीतागमः ४ तत एव विमलतरबोधात्तत्त्ववेदी ५ उपशान्तः ६ प्रवचनवत्सलः ७ सत्त्वहितरतः ८ आदेयः ९ अनुवर्त्तकः १० गम्भीरः ११ अविषादी १२ उपशमलब्ध्यादिसंपन्नः १३ प्रवचनार्थवक्ता १४ स्वगुर्वनुज्ञातगुरुपद १५ श्चेति ४ (२३०)

पादार्द्धगुणहीनौ मध्यमावराविति ५ (२३१)

नियम एवायमिति वायुरिति ६ (२३२)

समग्रगुणसाध्यस्य तदर्द्धभावेऽपि तत्सिद्ध्यसंभवादिति ७ (२३३)

नैतदेवमिति वाल्मीकिरिति ८(२३४)

निर्गुणस्य कथञ्चित्तद्गुणभावोपपत्तेरिति ९ (२३५)

अकारणमेतदिति व्यास इति १० (२३६)

गुणमात्रासिद्धौ गुणान्तरभाव (स्य) नियमा(द)भावादिति ११ (२३७)

नैतदेवमिति सम्राडिति १२ (२३८)

संभवादेव श्रेयस्त्वसिद्धेरिति १३ (२३९)

यत्किञ्चिदेतदिति नारद इति १४ (२४०)

गुणमात्राद् गुणान्तरभावेऽप्युत्कर्षायोगादिति १५ (२४१)

सोऽप्येवमेव भवतीति वसुरिति १६ (२४२)

अयुक्तं कार्षापणधनस्य तदन्यविढपनेऽपि कोटिव्यवहारारोपणमिति क्षीरकदम्बक इति १७ (२४३)

न चासदभिनिवेशवत्तदिति १७ (३८४)

अनुचितप्रतिपत्तौ नियमादसदभिनिवेशोऽन्यत्रानाभोगमात्रादिति १८ (३८५)

संभवनि तद्वतोऽपि चारित्रमिति १९ (३८६)

अनभिनिवेशवांस्तु तद्युक्तः खल्वतत्त्वे २० (३८७)

स्वस्वभावोत्कर्षादिति २१ (३८८)

मार्गानुसारित्वादिति २२ (३८९)

तथारुचिस्वभावत्वादिति २३ (३९०)

श्रवणादौ प्रतिपत्तेरिति २४ (३९१)

असदाचारगर्हणादिति २५ (३९२)

इत्युचितानुष्ठानमेव सर्वत्र श्रेय इति २६ (३९३)

भावनासारत्वात्तस्येति २७ (३९४)

इयमेव प्रधानं निःश्रेयसाङ्गमिति २८ (३९५)

एतत्स्थैर्याद्धि कुशलस्थैर्योपपत्तेरिति २९ (३९६)

भावनानुगतस्य ज्ञानस्य तत्त्वतो ज्ञानत्वादिति ३० (३९७)

न हि श्रुतमय्या प्रज्ञया, भावनादृष्टज्ञातं ज्ञातं नामेति ३१ (३९८)

उपरागमात्रत्वादिति ३२ (३९९)

दृष्टपायवददृष्टापायेभ्योऽनिवृत्तेरिति ३३ (४००)

एतन्मूले च हिताहितयोः प्रवृत्तिनिवृत्ती इति ३४ (४०१)

अत एव भावनादृष्टज्ञाताद्विपर्ययायोग इति ३५ (४०२)

तद्वन्तो हि दृष्टापाययोगेऽप्यदृष्टापायेभ्यो निवर्तमाना दृश्यन्त एवान्यरक्षादाविति ३६ (४०३)

इति मुमुक्षोः सर्वत्र भावनायामेव यत्नः श्रेयानिति ३७ (४०४)

तद्भावे निसर्गत एव सर्वथा दोषोपरतिसिद्धेरिति ३८(४०५)

वचनोपयोगपूर्वा विहितप्रवृत्तिर्योनिरस्या इति ३९ (४०६)

महागुणत्वाद्वचनोपयोगस्येति ४० (४०७)

तत्र ह्यचिन्त्यचिन्तामणिकल्पस्य भ-

तस्माद्यो यस्य योग्यः स्यात्,
तत्तेनालोच्य सर्वथा ।
आरब्धव्यमुपायेन,
सम्यगेष सतां नयः ॥ ३३ ॥

इत्युक्तो यतिधर्मः, इदानीमस्य विषयविभागमनुवर्णयिष्याम इति १ (३६८)

तत्र कल्याणाशयस्य श्रुतरत्नमहोदधेः उपशमादिलब्धिमतः परहितोद्यतस्य अत्यन्तगंभीरचेतसः प्रधानपरिणतेर्विधूतमोहस्य परमसत्त्वार्थकर्त्तुः सामायिकवतः विशुद्ध्यमानाशयस्य यथोचितप्रवृत्तेः सात्मीभूतशुभयोगस्य श्रेयान् सापेक्षयतिधर्म एवेति २ (३६९)

वचनप्रामाण्यादिति ३ (३७०)

संपूर्णदशपूर्वविदो निरपेक्षधर्मप्रतिपत्तिप्रतिषेधादिति ४ (३७१)

परार्थसंपादनोपपत्तेरिति ५ (३७२)

तस्यैव च गुरुत्वादिति ६ (३७३)

सर्वथा दुःखमोक्षणादिति ७ (३७४)

तथा–संतानप्रवृत्तेः ८ (३७५)

तथा–योगत्रयस्याप्युदग्रफलभावादिति ९ (३७६)

तथा–निरपेक्षधर्मोचितस्यापि तत्प्रतिपत्तिकाले परपरार्थसिद्धौ तदन्यसंपादकाभावे प्रतिपत्तिप्रतिषेधाच्चेति १० (३७७)

नवादिपूर्वधरस्य तु यथोदितगुणस्यापि साधुशिष्यनिष्पत्तौ साध्यान्तराभावतः सति कायादिसामर्थ्ये सद्वीर्याचारासेवनेन तथा प्रमादजयाय सम्यगुचितसमये आज्ञाप्रामाण्यतस्तथैव योगवृद्धेः प्रायोपवेशनवच्छ्रेयान्निरपेक्षयतिधर्म इति ११ (३७८)

तथा–तत्कल्पस्य च परं परार्थलब्धिविकलस्येति १२ (३७९)

उचितानुष्ठानं हि प्रधानं कर्मक्षयकारणमिति १३ (३८०)

उदग्रविवेकभावाद्रत्नत्रयाराधनादिति १४ (३८१)

अननुष्ठानमन्यदकामनिर्जराङ्गमुक्तविपर्ययादिति १५ (३८२)

निर्वाणफलमत्र तत्त्वतोऽनुष्ठानमिति १६ (३८३)

संहननाद्यपेक्षणमिति ८४ (३५३)
भावसंलेखनायां यत्न इति ८५ (३५४)
ततो विशुद्धं ब्रह्मचर्यमिति ८६ (३५५)
विधिना देहत्याग इतीति ८७ (३५६)
निरपेक्षयतिधर्मस्त्विति ८८ (३५७)
वचनगुरुतेति ८९ (३५८)
तथा–अल्पोपधित्वमिति ९० (३५९)
तथा–निष्प्रतिकर्मशरीरतेति ९१ (३६०)
अपवादत्याग इति ९२ (३६१)
तथा–ग्रामैकरात्रादिविहरणमिति ९३ (३६२)
तथा–नियतकालचारितेति ९४ (३६३)
तथा–प्राय ऊर्ध्वस्थानमिति ९५ (३६४)

तथा–देशनायामप्रबन्ध इति ९६ (३६५)
तथा–सदाऽप्रमत्ततेति ९७ (३६६)
तथा–ध्यानैकतानत्वमितीति ९८ (३६७)

सम्यग्यतित्वमाराध्य,
महात्मानो यथोदितम् ।
संप्राप्नुवन्ति कल्याण-
मिहलोके परत्र च ॥ २८ ॥
क्षीराश्रवादिलब्ध्योघ-
मासाद्य परमाक्षयम् ।
कुर्वन्ति भव्यसत्त्वाना-
मुपकारमनुत्तमम् ॥ २९ ॥
मुच्यन्ते चाशु संसाराद्,
अत्यन्तमसमञ्जसात् ।

जन्ममृत्युजराव्याधि-
रोगशोकाद्युपद्रुतात् ॥ ३० ॥
इति पंचमोऽध्यायः

## अथ षष्ठोऽध्यायः

आशयाद्युचितं ज्यायो-
ऽनुष्ठानं सूरयो विदुः ।
साध्यसिद्ध्यङ्गमित्यस्माद्,
यतिधर्मो द्विधा मतः ॥३१॥
समग्रा यत्र सामग्री,
तदक्षेपेण सिद्ध्यति ।
दवीयसाऽपि कालेन,
वैकल्ये तु न जातुचित् ॥ ३२ ॥

पतापिनः, अमङ्गुलावसाना इति ८ ११ (४५४)

तथा–काले धर्मप्रतिपत्तिरिति १२ (४५५)

तत्र च–गुरुसहायसंपदिति १३(४५६)

ततश्च–साधु संयमानुष्ठानमिति १४ (४५७)

ततोऽपि–परिशुद्धाराधनेति १५ (४५८)

तत्र च–वधिवच्छरीरत्याग इति१६(४५९)

ततो–विशिष्टतरं देवस्थानमिति१७(४६०)

ततः–सर्वमेव शुभतरं तत्रेति १८ (४६१)

परं–गतिशरीरादिहीनमिति १९ (४६२)

तथा–रहितमौत्सुक्यदुःखेनेति२०(४६३)

अतिविशिष्टाल्हादादिमदिति २१ (४६३)

ततः–तच्च्युतावपि विशिष्टदेश इत्यादि समानं पूर्वेणेति २२ (४६५)

विशिष्टतरं तु सर्वमिति २३ (४६६)

क्लिष्टकर्मविगमादिति २४ (४६७)

शुभतरोदयादिति २५ (४६८)

जीववीर्योल्लासादिति २६ (४६९)

परिणतिवृद्धेरिति २७ (४७०)

तत्तथास्वभावत्वादिति २८ (४७१)

किंच–प्रभूतोदाराण्यपि तस्य भोगसाधनानि, अयत्नोपनतत्वात् प्रासङ्गिकत्वादभिष्वङ्गाभावात् कुत्सिताप्रवृत्तेः शुभानुवन्धित्वादुदारसुखसाधनानि च बन्धहेतुत्वाभावेनेति २९ (४७२)

अशुभपरिणाम एव हि प्रधानं बन्धकारणं, तदङ्गतया तु बाह्यमिति३०(४७३)

तदभावे बाह्यादल्पबन्धभावादिति ३१ (४७४)

वचनप्रामाण्यादिति ३२ ४७५

बाह्योपमर्देऽप्यसंज्ञिषु तथाश्रुतेरिति ३३ (४७६)

एवं परिणाम एव शुभो मोक्षकारणमपीति ३४ (४७७)

तदभावे समग्रक्रियायोगेऽपि मोक्षासिद्धेरिति ३५ (४७८)

सर्वजीवानामेवानन्तशो ग्रैवेयकोपपातश्रवणादिति ३६ (४७९)

समग्रक्रियाऽभावे तदनवाप्तेरिति ३७ (४८०)

आदौ सर्वत्र तद्युक्त-
मभिधातुमिदं पुनः ॥ ३८ ॥
यथा-विशिष्टं देवसौख्यं यत्,
शिवसौख्यं च यत्परम् ।
धर्मकल्पद्रुमस्येदं,
फलमाहुर्मनीषिणः ॥ ३९ ॥

इत्युक्तो धर्मः, साम्प्रतमस्य फलमनुवर्णयिष्यामः १ (४४४)

द्विविधं फलम्-अनन्तरपरम्परभेदादिति २ (४४५)

तत्रानन्तरफलमुपप्लवह्रास इति ३ (४४६)

तथा-भावैश्वर्यवृद्धिरिति ४ (४४७)

तथा-जनप्रियत्वमिति ५ (४४८)

परम्परफलं तु सुगतिजन्मोत्तमस्थानपरम्परानिर्वाणावाप्तिरिति ६ (४४९)

सुगतिर्विशिष्टदेवस्थानमिति ७(४५०)

तत्रोत्तमा रूपसंपत्, सत्स्थितिप्रभावसुखद्युतिलेश्यायोगः, विशुद्धेन्द्रियावधित्वं, प्रकृष्टानि भोगसाधनानि, दिव्यो विमाननिवहः, मनोहराण्युद्यानानि, रम्या जलाशयाः, कान्ता अप्सरसः, अतिनिपुणाः किङ्कराः, प्रगल्भो नाट्यविधिः, चतुरोदारा भोगा, सदा चित्ताल्हादः, अनेकसुखहेतुत्वं, कुशलानुबन्धः, महाकल्याणपूजाकरणं, तीर्थङ्करसेवा, सद्धर्मश्रुतौ रतिः, सदा सुखित्वमिति ८ (४५१)

तथा-तच्च्युतावपि विशिष्टे देशे विशिष्ट एव काले स्फीते महाकुले निष्कलङ्केऽन्वयेन उदग्रे सदाचारेण आख्यायिकापुरुषयुक्ते अनेकमनोरथापूरकमत्यन्तनिरवद्यं जन्मेति ९ (४५२)

सुन्दरं रूपं आलयो लक्षणानां रहितमामयेन युक्तं प्रज्ञया संगतं कलाकलापेन १० (४५३)

तथा-गुणपक्षपातः १ असदाचारभीरुता २ कल्याणमित्रयोगः ३ सत्कथाश्रवणं ४ मार्गानुगो बोधः ५ सर्वोचितमाप्तिः, हिताय सत्त्वसंघातस्य, परितोषकरी गुरूणां, संवर्द्धनी गुणान्तरस्य, निदर्शनं जनानां ६ अत्युदार आशयः ७ असाधारणा विषयाः, रहिताः संक्लेशेन, अपरो-

चारित्रिणां तत्साधनानुष्ठानविषयस्तू-पदेशः, प्रतिपात्यसा, कर्मवैचित्र्यादिति ६६ (४३३)

तत्संरक्षणानुष्ठानविषयश्च चक्रादिभ्रमणवदत्यवसानभ्रमाधानज्ञातादिति ६७ (४३४)

माध्यस्थ्ये तद्वैफल्यमेवेति ६८ (४३५)

स्वयंभ्रमणसिद्धेरिति ६९ (४३६)

भावयतिर्हि तथा कुशलाशयत्वादशक्तोऽसमञ्जसप्रवृत्तावितरस्यामिवेतर इति ७० (४३७)

इति निदर्शनमात्रमिति ७१ (४३८)

न सर्वसाधर्म्ययोगेनेति ७२ (४३९)

यतेस्तदप्रवृत्तिनिमित्तस्य गरीयस्त्वादिति ७३ (४४०)

वस्तुतः स्वाभाविकत्वादिति ७४ (४४१)

तथा सद्भाववृद्धेः फलोत्कर्षसाधनादिति ७५ (४४२)

उपप्लवविगमेन तथावभासनादितीति ७६ (४४३)

एवंविधयतेः प्रायो,
भावशुद्धेर्महात्मनः ।
विनिवृत्ताग्रहस्योच्चै-
र्मोक्षतुल्यो भवोऽपि हि ॥ ३४ ॥

सद्दर्शनादिसंप्राप्तेः,
संतोषामृतयोगतः ।
भावैश्वर्यप्रधानत्वात्,
तदासन्नत्वतस्तथा ॥ ३५ ॥

उक्तं मासादिपर्याय-
वृद्ध्या द्वादशभिः परम् ।
तेजः प्राप्नोति चारित्री,
सर्वदेवेभ्य उत्तमम् ॥ ३६ ॥

इति षष्ठोऽध्यायः समाप्तः ।

## अथ सप्तमोऽध्यायः

उचिता-नुष्ठान-योग्यता

फलप्रधान आरम्भः,
इति सल्लोकनीतितः ।
संक्षेपादुक्तमस्येदं,
व्यासतः पुनरुच्यते ॥ ३७ ॥

प्रवृत्त्यङ्गमदः श्रेष्ठं,
सत्त्वानां प्रायशश्च यत् ।

गवतो बहुमानगर्भं स्मरणमिति ४१(४०८)

भगवतैवमुक्तमित्याराधनायोगादिति ४२ (४०९)

एवं च प्रायो भगवत एव चेतसि समवस्थानमिति ४३ (४१०)

तदाज्ञाऽऽराधनाच्च तद्भक्तिरेवेति ४४ (४११)

उपदेशपालनैव भगवद्भक्तिः, नान्या, कृतकृत्यत्वादिति ४५ (४१२)

उचितद्रव्यस्तवस्यापि तद्रूपत्वादिति ४६ (४१३)

भावस्तवाङ्गतया विधानादिति ४७ (४१४)

हृदि स्थिते च भगवति क्लिष्टकर्मविगम इति ४८ (४१५)

जलानलवदनयोर्विरोधादिति ४९ (४१६)

इत्युचितानुष्ठानमेव सर्वत्र प्रधानमिति ५० (४१७)

प्रायोऽतिचारासंभवादिति ५१(४१८)

यथाशक्ति प्रवृत्तेरिति ५२ (४१९)

सद्भावप्रतिबन्धादिति ५३ (४२०)

इतरथाऽऽर्तध्यानोपपत्तिरिति (५४) (४२१)

अकालौत्सुक्यस्य तत्त्वतस्तत्त्वादिति ५५ (४२२)

नेदं प्रवृत्ति कालसाधनमिति५६(४२३)

इति सदोचितमिति ५७ (४२४)

तदा तदसत्त्वादिति ५८ (४२५)

प्रभूतान्येव तु प्रवृत्तिकालसाधनानीति ५९ (४२६)

निदानश्रवणादेरपि केषांचित्प्रवृत्तिमात्रदर्शनादिति ६० (४२७)

तस्यापि तथापारम्पर्यसाधनत्वमिति ६१ (४२८)

यतिधर्माधिकारश्चायमिति प्रतिषेध इति ६२ (४२९)

न चैतत् परिणते चारित्रपरिणाम इति ६३ (४३०)

तस्य प्रसन्नगम्भीरत्वादिति ६४ (४३१)

हितावहत्वादिति ६५ (४३२)

औत्सुक्यवृद्धिर्हि लक्षणमस्याः,हानिश्च समयान्तरे इति ५८ (५३९)

न चैतत्तस्य भगवतः,आकालं तथावस्थितेरिति ५९ (५४०)

कर्मक्षयाविशेषादिति ६० (५४१)

इति निरुपमसुखसिद्धिरितिद१ (५४२)

सद्ध्यानवन्हिना जीवो,
दग्ध्वा कर्मेन्धनं भुवि ।
सद्ब्रह्मादिपदैर्गीतं,
स याति परमं पदम् ॥ ४६ ॥
पूर्वाविधवशादेव,
तत्स्वभावत्वतस्तथा ।
अनन्तवीर्ययुक्तत्वात्,
समयेनानुगुण्यतः ॥ ४७ ॥
स तत्र दुःखविरहा-
दत्यन्तसुखसंगतः ।
तिष्ठत्ययोगो योगीन्द्र-
वन्द्यस्त्रिजगतीश्वरः ॥ ४८ ॥
इत्यष्टमोऽध्यायः

इति श्रीमद्धरिभद्रसूरिवर्यविरचितधर्मबिन्दुसूत्राणि

तदनादित्वेन तथाभावसिद्धेरिति ३३ (५१४)

सर्वविप्रमुक्तस्य तु तथास्वभावत्वान्निष्ठितार्थत्वान्न तद्ग्रहणे निमित्तमिति ३४ (५१५)

नाजन्मनो जरेति ३५ (५१६)

एवं च-न मरणभयशक्तिरिति ३६ (५१७)

तथा-न चान्य उपद्रव इति ३७ (५१८)

विशुद्धस्वरूपलाभ इति ३८ (५१९)

तथा-आत्यन्तिकी व्याबाधानिवृत्तिरिति ३९ (५२०)

सा निरुपमं सुखमिति ४० (५२१)

सर्वथाप्रवृत्तेरिति ४१ (५२२)

समाप्तकार्यत्वादिति ४२ (५२३)

न चैतस्य क्वचिदौत्सुक्यमिति ४३ (५२४)

दुखं चैतत् स्वास्थ्यविनाशनेनेति ४४ (५२५)

दुःखशक्त्युद्रेकतोऽस्वास्थ्यसिद्धेरिति ४५ (५२६)

अहितप्रवृत्त्येति ४६ (५२७)

स्वास्थ्यं तु निरुत्सुकतया प्रवृत्तेरिति ४७ (५२८)

परमस्वास्थ्यहेतुत्वात् परमार्थतः स्वास्थ्यमेवेति ४८ (५२९)

भावसारे हि प्रवृत्त्यप्रवृत्ती सर्वत्र प्रधानो व्यवहार इति ४९ (५३०)

प्रतीतिसिद्धश्चायं सद्योगसचेतसामिति ५० (५३१)

सुस्वास्थ्यं च परमानन्द इति ५१ (५३२)

तदन्यनिरपेक्षत्वादिति ५२ (५३३)

अपेक्षाया दुःखरूपत्वादिति ५३ (५३४)

अर्थान्तरप्राप्त्या हि तत्प्रवृत्तिर्दुःखत्वेनानिवृत्तिरेवेति ५४ (५३५)

न चास्यार्थान्तरावाप्तिरिति ५५ (५३६)

स्वस्वभावनियतो ह्यसौ विनिवृत्तेच्छाप्रपञ्च इति ५६ (५३७)

अतोऽकामत्वात्तत्स्वभावत्वाच्च लोकान्तक्षेत्रावाप्तिरिति ५७ (५३८)

रोत्तारः, केवलाभिव्यक्तिः, परमसुखलाभ इति ५ (४८६)

सदारोग्याप्तेरिति ६ (४८७)

भावसंनिपातक्षयादिति ७ ४८८

रागद्वेषमोहा हि दोषाः,तथा तथाऽऽत्मदूषणादिति ८ (४८९)

अविषयेऽभिष्वङ्गकरणाद्राग इति ९ (४९०)

तत्रैवाग्निज्वालाकल्पमात्सर्यापादनाद्द्वेष इति १० (४९१)

हेयेतरभावाधिगमप्रतिबन्धविधानान्मोह इति ११ (४९२)

सत्स्वेतेषु न यथावस्थितं सुखं, स्वधातुवैषम्यादिति १२ (४९३)

क्षीणेषु न दुःखं, निमित्ताभावादिति १३ (४९४)

आत्यन्तिकभावरोगविगमात् परमेश्वरताऽऽप्तेस्तत्तथास्वभावत्वात् परमसुखभाव इतीति १४ (४९५)

देवेन्द्रहर्षजननमिति १५ (४९६)

तथा–पूजानुग्रहाङ्गतेति १६ (४९७)

तथा–प्रातिहार्योपयोग इति१७(४९८)

ततः–परं परार्थकरणमिति १८(४९९)

अविच्छेदेन भूयसां मोहान्धकारापनयनं हृद्यैर्वचनभानुभिरिति १९ (५००)

सूक्ष्मभावप्रतिपत्तिरिति २० (५०१)

ततः–श्रद्धामृतास्वादनमिति२१(५०२)

ततः–सदनुष्ठानयोग इति२२(५०३)

ततः -परमापायहानिरिति २३ (५०४)

सानुबन्धसुखभाव उत्तरोत्तरः प्रकामप्रभूतसत्त्वोपकाराय अवन्ध्यकारणं निवृतेरिति २४ ५०५

इति परं परार्थकरणमिति २५ (५०६)

भवोपग्राहिकर्मविगम इति २६(५०७)

ततः–निर्वाणगमनमिति २७ (५०८)

तत्र च–पुनर्जन्माद्यभाव इति २८ (५०९)

बीजाभावतोऽयमिति २९ (५१०)

कर्मविपाकस्तदिति ३० (५११)

अकर्मा चासाविति ३१ (५१२)

तद्वत एव तद्ग्रह इति ३२ (५१३)

इत्यप्रमादसुखवृद्ध्या तत्काष्ठासिद्धौ निर्वाणावाप्तिरितीति ३८ (४८१)

यत्किंचन शुभं लोके,
स्थानं तत्सर्वमेव हि ।
अनुबन्ध गोपे
[illegible] ति मानवः ॥ ४० ॥

धर्मश्चिन्तामणिः श्रेष्ठो,
धर्मः कल्याणमुत्तमम् ।
हित एकान्ततो धर्मो,
धर्म एवामृतं परम् ॥ ४१ ॥

चतुर्दशमहारत्न–
सद्भोगान्नृष्वनुत्तमम् ।
चक्रवर्त्तिपदं प्रोक्तं,
धर्महेलाविजृम्भितम् ॥ ४२ ॥

इति सप्तमोऽध्यायः

## अथ अष्टमः अध्यायः

किं चेह बहुनोक्तेन,
तीर्थकृत्त्वं जगद्धितम् ।
परिशुद्धादवाप्नोति,
धर्माभ्यासान्नरोत्तमः ॥४३॥

नातः परं जगत्यस्मिन्,
विद्यते स्थानमुत्तमम् ।
तीर्थकृत्त्वं यथा सम्यक्,
स्वपरार्थप्रसाधकम् ॥ ४४ ॥

पञ्चस्वपि महाकल्या–
णेषु त्रैलोक्यशङ्करम् ।
तथैव स्वार्थसंसिद्धिः,
परं निर्वाणकारणम् ॥ ४५ ॥

इत्युक्तप्रायं धर्मफलम्, इदानीं तच्छेपमेव उदग्रमनुवर्णयिष्यामः १ (४८२)

तच्च [सुख] परम्परया प्रकृष्टभावशुद्धेः सामान्यं चरमजन्म तथा तीर्थकृत्त्वं चेति २ (४८३)

तत्राक्लिष्टमनुत्तरं विषयसौख्यं, हीननभावविगमः, उदग्रतरा सम्पत्, प्रभूतोपकारकरणं, आशयविशुद्धिः, धर्मप्रधानता, अवन्ध्यक्रियालमिति ३ (४८४)

तथा–विशुद्ध्यमानाप्रतिपातिचरणावाप्तिः, तत्सात्म्यभावः, भव्यप्रमोदहेतुता, ध्यानसुखयोगः, अतिशयर्द्धिप्राप्तिरिति (४८५)

अपूर्वकरणं, क्षपकश्रेणिः, मोहसाग-

ऊकारः



ऋकारः



एकारः



औकारः



ककारः

इकारः



उकारः

## धर्मविन्दुगतसूत्राद्यकारादि.

### अकार.

धकारः



नकारः

दकारः

गकारः



चकारः

पकारः

आकारः



इकारः



उकारः



एकारः



औकारः

ह



## वृत्तिगतश्लोकाद्यकाराद्यनुक्रमः

अकार

